INDIAN RESEARCH INSTITUTE PUBLICATIONS

*VEDIC SERIES*

# ṚGVEDA-SAMHITĀ

## PART V






DECEMBER 1934

*Published by*

SATIS CHANDRA SEAL, M.A., B.L.

*Hony. General Secretary*

THE INDIAN RESEARCH INSTITUTE

55, UPPER CHITPORE ROAD

CALCUTTA

Inland Price Re. 1-8 | Foreign Price 2s. 6d.

**Hony. Fellows :—**

Dr. Rabindra Nath Tagore, N. L.
Dr. Sir Brajendra Nath Seal, Kt., M.A., Ph.D., D.Sc.
Dr. Sir S. Radhakrishnan, Kt., M.A., D. Litt.

## OBJECTS OF THE INSTITUTE.

(a) To publish the best products of Ancient Indian Literature in critical and moderately priced editions with translations and critical and explanatory notes in English, Hindi and Bengali or other Vernaculars.

(b) To offer facilities to scholars to make researches in Ancient Indian Literature under proper direction and to embody their results in periodicals in English and Vernaculars.

(c) To maintain a suitable library, museum etc.

(d) To open cultural centres in different parts of India and in other countries.

(e) To take steps to spread the knowledge of Ancient Indian Culture and Civilization.

(f) Te be associated with other institutions with similar objects and to work for harmonious federation of all such institutions.

(g) To organise educational institutions on the lines of ancient Gurukula with up-to-date resources for scientific and technical education.

## Scheme of Work

1. The following Series of Literature may be published simultaneously :—

(a) Vedic Series (consisting of the whole Vedic Literature).

(b) Philosophical Series (consisting of the best products of all the systems.)

(c) Smrti Series (including Purānas, Dharmaśastras, etc.),

(d) Buddhistic Series,

(e) Jaina Series,

(f) Indian Positive Sciences Series (consisting of Indian Chemistry, Physics, Mathematics, Astronomy etc.)

(g) Ayurveda Series.

(h) Indian Sociology Series (consisting of Indian Law, History, Economics etc.)

(i) Fine Arts Series,

(j) Miscellaneous (Exegetic works on Indian Culture.)

(k) Indian History Series

(l) Research Journal in English and popular Journals in Vernaculars.

"सुरूप" इत्यादिषु षट्सूक्तेषु तृतीयस्य "युञ्जन्ति" इति सूक्तस्य मन्त्रसंख्या ऋषिच्छन्दोदेवतानि विनियोगश्चेत्येते पूर्ववदवगन्तव्याः। दशर्चे तस्मिन्सूक्त आद्यास्तिस्रोऽन्तिमा चेत्येताश्चतस्र ऐन्द्र्यः। "आ दह" इत्येताम् चतुर्थीमारभ्य षड्चो मारुत्यः। तासु मध्ये "वीळु चिदिन्द्रेण" इत्येते द्वे ऋचौ मारुत्यौ सत्यावैन्द्र्यावपि भवतः। तदेतत्सर्वम् अनुक्रमणिकायामुक्तम्—"सुरूपकृत्नुं दशैन्द्रमातु युञ्जन्त्यादहेत्येताः षण्मारुत्यो वीळु चिदिन्द्रेणेत्यैन्द्र्यौ च" इति। एतस्मिन्सूक्ते "युञ्जन्ति" इत्यसौ तृचस्तृतीये रात्रिपर्याये ब्राह्मणाच्छंसिनोऽनुरूपः। तथा च "अतिरात्रे पर्यायाणाम्" इति खण्डे "योगे योगे तवस्तरं युञ्जन्ति ब्रध्नमरुषम्" (आ० ६।४) इति सूत्रितम्।

तत्र प्रथमामृचमाह—

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः॥
रोचन्ते रोचना दिवि॥ १॥

युञ्जन्ति। ब्रध्नम्। अरुषम्। चरन्तम्। परि। तस्थुषः।
रोचन्ते। रोचना। दिवि॥ १॥

इन्द्रो हि परमैश्वर्ययुक्तः। परमैश्वर्यं चाग्निवाय्वादित्यनक्षत्ररूपेणावस्थानादुपपद्यते। ब्रध्नमादित्यरूपेणावस्थितम्। अरुषम्—हिंसकरहिताग्निरूपेणावस्थितम्। चरन्तम्—वायुरूपेण सर्वतः प्रसरन्तमिन्द्रम् परि तस्थुषः—परितोऽवस्थिता लोकत्रयवर्तिन प्राणिनो युञ्जन्ति स्वकीये कर्मणि देवतात्वेन संबद्धं कुर्वन्ति। तस्यैवेन्द्रस्य मूर्तिविशेषभूता रोचना—नक्षत्राणि दिवि—द्युलोके रोचन्ते। अस्य मन्त्रस्योक्तार्थपरत्वं ब्राह्मणान्तरे व्याख्यातम् "युञ्जन्ति ब्रध्न"मित्याह। असौ वा आदित्यो ब्रध्नः। आदित्यमेवास्मै युनक्ति। अरुषमित्याह। अग्निर्वा अरुषः। अग्निमेवास्मै युनक्ति। चरन्तमित्याह। वायुर्वै चरन्। वायुमेवास्मै युनक्ति। परि तस्थुष इत्याह। इमे वै लोकाः परि तस्थुषः। इमानेव लोकानस्मै युनक्ति। रोचन्ते रोचना दिवीत्याह। नक्षत्राणि वै रोचना दिवि। "नक्षत्राण्येवास्मै रोचयन्तीति"। (तै० ब्रा० ३।९।४।७) पंचविंशतिसंख्याकेषु महन्नामसु "महो ब्रध्न" इति पठितम्। आदित्यस्यापि महत्त्वादेव ब्रध्नत्वम्॥

युञ्जन्ति। अन्तः प्रत्ययस्वरेणाद्युदात्तत्वम्। ब्रध्नम्। प्रातिपदिकान्तोदात्तः। अरुषम्। "रुष रिष हिंसार्थो।" रोषन्तीति रुषा हिंसकाः। "इगुपधज्ञाप्रीकिरः कः।" (पा० ३।१।१३४) इति कः। प्रत्ययस्वरेणोदात्तः। न सन्ति रुषा यस्यासावरुषः। "नञ्सुभ्याम्"। (पा० ६।२।१७२) इत्युत्तरपदान्तोदात्तत्वम्। "अमि पूर्वः"। (पा० ६।१।१०७) इति पूर्वरूपे "एकादेश उदात्तेनोदात्तः"। (पा० ८।२।५) इत्युदात्तत्वम्। चरन्तम्। शपः पित्त्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते। तस्थुषः। तिष्ठतेर्लिटः क्वसुरादेशः। "वस्वेकाजाद्घसाम्।" (पा० ७।२।६७) इतीटमन्तरङ्गमपि बाधित्वा "संप्रसारणम्।" "संप्रसारणाश्रयं च बलीय" इति शसि परतो भवात्। "वसोः संप्रसारण"-परपूर्वत्वम्। "शासिवसिघसीनां च"। (पा० ८।३।६०) इति षत्वम्। वसोः प्रत्ययस्वरेणोदात्तत्वम्। रोचन्ते। तिङो लसार्वधातुकानुदात्तत्वम्। शपः पित्त्वादनुदात्तत्वम्। धातुस्वर एव। रोचना। "अनुदात्तेतश्च हलादेः"। (पा० ३।३।१४९) इति युच्। "युवोरनाकौ" (पा० ७।१।१) इत्यनादेशः। "चित" इत्यन्तोदात्तत्वम्। दिवि। "ऊडिदमि"त्यादिना विभक्तेरुदात्तत्वम्॥१॥ *

युञ्जन्ति

* युञ्जन्ति। युजिर् योगे इत्यस्माद्रौधादिकाद्युज्धातोः कर्तरि वर्तमाने लटि तस्य स्थाने प्रथमपुरुष वहुवचने परस्मैपदे झिप्रत्यये तदवयवस्य झकारस्य झोऽन्तइत्यन्तादेशेमध्ये शबपवादेन रुधादिभ्यः श्नमित्यनेन श्नमि विकरणे सार्वधातुकमपिदित्यनेन तस्य ङिद्वद्भावेन धातोरिकारस्य क्ङितिचेत्यनेन गुणनिषेधे श्नसोरल्लोप इत्यनेन श्नाकारस्य लोपे युञ्ज+अन्ति इत्यत्र नकारस्यानुस्वारे परसवर्णे युञ्जन्ति इति पदम्। श्नमोमित्वेन प्रत्ययत्वेऽप्यन्त्यादचः परा प्रवृत्तिः। तत्र धातोरित्यनेन धात्वन्तस्योदात्तत्वं श्नमो झेश्च प्रत्ययत्वेन आद्युदात्तश्चेत्यनेनाद्युदात्तत्वं प्राप्तम्। तत्र सति शिष्टत्वेन झिप्रत्ययस्यैव स्वरः प्रवर्तते सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वलवत्त्ववोधनात्। श्नमोविकरणस्य स्वरस्त्वत्र लुप्यत एव। विकरणत्वाच्चतस्यबलीयस्त्वाभावश्च "अन्यत्र विकरणेभ्य इत्युक्तेः"। एवं च धातुस्वरः शेषनिघातेनानुदात्तः। झेःप्रवर्तमानः स्वरश्चान्तादेशोत्तरं प्रवर्तते तस्मात्तत्र आद्युदात्तश्चेति प्रत्ययाद्युदात्तोऽन्त्यकारएव प्रवर्तते। यथाच युञ्जन्ति इत्यत्र प्रथमोऽनुदात्तो द्वितीय उदात्तः तृतीयोऽनुदात्तोऽप्युदात्तात्पर इति उदात्तादनुदात्तस्य स्वरित इत्यनेन स्वरितः। ब्रध्नम्। बन्धबन्धने इत्यस्मात्क्र्यादिकाद्बन्धधातोः "वन्धेर्ब्रधिबुधी च" इत्यौणादिकेन सूत्रेण नक्प्रत्ययो बन्धेर्ब्रधिरादेशश्च विधीयेते इति ब्रध्नशब्दःसिध्यति तस्माद्द्वितीयैकवचनेऽमि अमिपूर्व इति पूर्वरूपे ब्रध्नमितिपदम्। तत्र धातोरिति प्राप्तो धातोः स्वरः सतिशिष्टेन प्रत्ययस्य आद्युदात्तश्चेति स्वरेण निवर्त्यत इति शेषनिघातेन धातुरनुदात्तान्तः। तत्स्थाने जातस्य ब्रध्नादेशस्यापि स्थानिवत्त्वेन धातुत्वेनानुदात्तान्तता। एवं च ब्रध्नशब्दोऽन्तोदात्तः। उणादिष्वव्युत्पन्नत्वपक्षोऽपीति तदभि प्रायेण प्रातिपदि-

स्क०—अत्रमन्त्रे स्तोतारः—यष्टारश्च स्तुतिभिर्हविर्भिश्चमहान्तमिन्द्रं सम्बन्धयन्ति दीप्त्यर्थाद्रुशतेराङ्पूर्वस्य आङोह्रस्वत्वेनारुषं दीप्तमित्यर्थः। "आरुपति-इत्यादि गतिकर्मसुपाठात्—शत्रून् यष्टानवा गन्तारम्, सर्वत्रगमन शीलम्, अर्थात्—यत्रयत्रेन्द्रो गच्छति-तत्र तत्रैनं स्तोतारो यष्टारश्चस्तुवन्त्यर्थः। अथवा—सर्वत्र गमनीलं महान्तं दीप्तमिन्द्रम्, मनुष्या इदमिदंच नो देहि, इति याचन्त इत्यर्थः। अत्र सामर्थ्याद् रथ एव युज्यमानः अरुपादिगुणकं रथमेव युञ्जन्ति नेन्द्रम् सारथयो मातलि प्रभृतयः अन्येऽपिचेन्द्रस्य रथमेव युञ्जन्ति। तस्थुपः-इति षष्ठीनिर्देशात् प्रभावेनेति तदर्थः-सर्वत्र व्याप्रियमाणस्येन्द्रस्य प्रभावेन दिवि दीप्तिस्वरूपाणि नक्षत्रादीनि प्रकाशन्त-इत्यभिप्रायः। यद्वा-आदित्यरश्मयो रोचन्ते· रोचनादिवि, ते आदित्यरश्मयः प्रावृडारम्भे रसादातारः। ते रसानपकर्षयन्तः उद्योजयन्तीन्द्रं वृष्टिकर्म्मणि। ज्योतिष्ट्वापेक्षं रश्मीनां नपुंसकत्वम् ॥१॥

कान्तोदात्त इत्युक्तिभाष्यकृतः। अत्र-प्रत्ययस्य सुप्त्वेनानुदात्तत्वेन तेन सहपूर्वस्य ब्रध्नशब्दान्त्याकारस्यामिपूर्व इति पूर्वरूपैकादेशस्यपूर्वोदात्तपरानुदात्तरूपोदात्तानुदात्तोभयस्थानिकत्वेन स्थानिवत्त्वेनोभयधर्मकस्वरितत्वे प्राप्ते तदपवादेन प्रकृते एकादेश उदात्तेनोदात्त इत्यनेनोदात्तेनैकादेश इति कृत्वोदात्तत्वविधानम्। ततश्च ब्रध्नंशब्दे आदिरनुदात्तो द्वितीयउदात्तः। अरुपम्। उप रुप रिप हिंसार्थो इत्यत्र पठिताद्रुपधातोरिगुपधज्ञाप्रीकिरःक इत्यनेन कप्रत्यये कित्त्वाद्गुणनिषेधे रुप शब्दः। ततोनञा बहुव्रीहौ अरुपेनिप्रातिपदिकम्। ततो द्वितीयैकवचनेऽमि अमिपूर्व इति पूर्वरूपे अरुपमितिपदम्। तत्र रुप इत्यत्र धातुस्वरं बाधित्वा प्रत्ययस्वर इति अन्तोदात्तत्वम्। नञोनिपातत्वेन निपाता आद्युदात्ता इत्याद्युदात्तत्वम्। ततो नञ्रुपशब्दयोर्बहुव्रीहौ समासस्येत्यनेन समासान्तस्योदात्तत्वे प्राप्ते तदपवादेन बहुव्रीहौ प्रकृत्यापूर्वपदमिति बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरकत्वे प्राप्ते तदपिबाधित्वा नञ्सुभ्यामित्येनेनोत्तरपदान्तस्योदात्तत्वं विधीयत-इति अरुपशब्दोऽन्तोदात्तः। शेषनिघातेनावशिष्टयोरचोरनुदात्तत्वम्। अमो द्वितीयैकवचनस्य सुप्त्वेनानुदात्तत्वेन तेन सहपूर्वस्य पूर्वरूपैकादेशोऽपि पूर्वोदात्तस्थानिक इति उपर्युक्तवदेकादेशउदात्तेनोदात्त इत्युदात्त इति अरुपपदेआदिस्वरद्वयमनुदात्तमन्त्यउदात्तः संहितायां ब्रध्नंशब्दीयोदात्तात्परत्वादाद्यस्य उदात्तादनुदात्तस्य स्वरितः। द्वितीयस्य स्वरितात्परत्वात् स्वरितात्परेषामनुदात्तानामित्यनेन प्रचयस्वरः प्राप्तः परन्तु प्रकृते तृतीयस्योदात्तस्यपरत्वादुदात्तस्वरितपरस्य सन्नतर इति सन्नतरः। चरन्तम्। चर् धातोर्लटि तस्य शत्रादेशेमध्येशपिचरच्छब्दः। ततो द्वितीयैकवचनेऽमि चरन्तमितिपदम्। तत्र शपःपित्त्वादनुदात्तत्वं शतुरपितस्यानुदात्तङिदुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोरित्यनेनादुपदेशात्परत्वेनानुदात्तत्वेन धातुस्वरएवावतिष्ठत इति चरच्छब्द आद्युदात्तः। अमोऽपि सुप्त्वादनुदात्तत्वेन चरन्तं पदमप्याद्युदात्तमेव। तत्र पद द्वितीयस्य प्रथमादुदात्तात्परत्वमितिस्वरितत्वं तृतीयस्य स्वरितात्पपरत्वात्प्रचयः पदपाठे। संहितायां तु परिशब्दावयवं उदात्तः पर इति अनुदात्तापरपर्यायः सन्नतर एव उदात्तस्वरितपरस्येत्यनेन परि। निपातत्वादाद्युदात्तः शेषनिघातेनान्तानुदात्तश्च। तस्योदात्तात्परत्वात्स्वरितः। तस्थुपः। ष्ठा गति निवृत्ताविति धातुतो लिटि तस्य क्वसुरादेशः। धातोर्द्वित्वमभ्यासकार्यञ्च। तथाच स्थास्थाइतिद्वित्वे· पूर्वस्याभ्यासत्वाद्ध्रस्वे

वें० —युञ्जन्ति ब्रध्नम् । युञ्जन्ति महान्तमारोचमानम्, दिविचरन्तं परितः-तस्थिवांसो देवालोका वा रोचन्ते च । रोचनानि नक्षत्राणि, इन्द्रतेजसा सन्धुक्षितान्यहत्वेऽपि प्रसारणमन्यत्रापि दृष्टम् ॥१॥

हलादिः शेषे तस्था इत्यवस्थायां क्वसो प्राप्तोऽपीडागमोऽकृतव्यूहा इतिपरिभाषया न प्रवर्तते। ततो द्वितीया बहुवचने शसि तन्निमित्तके वसोः संप्रसारणमिति वकारस्योकारे तत्परवर्तिनोऽकारस्य च संप्रसारणाच्चेति पूर्व रूपैकादेशे तस्था+उस् इत्यत्र आतो लोप इटिचेत्याकार लोपे षत्वे तस्थुषः पदं रुत्वविसर्गयोः। तत्र धातोरन्त उदात्तो धातो रित्यनेन सूत्रेण प्राप्तः प्रत्ययस्वरेण निवर्त्तते। तथाच धातोः शेष निघातेनानुदात्तत्वेन तादृशस्यैव द्विरुच्चारणात्मके द्विर्वचने उभयोरपि वचनयोरनुदात्तत्वमेव। प्रत्ययस्य वकारस्य संप्रसारणे संप्रसारणजस्य व्यञ्जनस्थानिकतयाऽनुदात्तत्वम्। ततस्तेन सह परवर्त्तिनः क्वसोरकारस्योदात्तस्य पूर्वरूपैकादेशे एकादेशस्योदात्तस्थानिकत्वेनोदात्तत्वमेकादेश उदात्तेनोदात्त इत्यनेन। शसस्तुसुप्त्वादनुदात्तत्वमिति तस्थुषः पदे मध्योदात्तता आद्यन्तयोस्त्वनुदात्तत्वम्। तत्रान्त्यस्योदात्त। त्परत्वात्स्वरित उदात्तादनुदात्तस्य स्वरित इत्यनेन। रोचन्ते। रुच् दीप्तौ इत्यस्माद्भ्वादिकाल्लटि तस्य प्रथमपुरुषबहुवचने आत्मनेपदे झे तदवयवस्य झस्य झोऽन्तइत्यन्तादेशे झकारस्य च टित् आत्मनेपदानां टेरे इत्यनेनेत्वे मध्येशपि तन्निमित्तके धातूपधाया गुणेअतोगुणे इत्यनेन शब्कारस्यान्तेशब्दाकारेण पररूपैकादेशे रोचन्ते इति पदम्। तत्र शपः पित्वादनुदात्तत्वं आत्मनेपदस्य झस्य लस्थानिकसार्वधातुकतया शब्कारात्परतयाच "तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमन्ङिङ्को" रित्यनेन प्रत्ययाद्युदात्तत्वं बाधित्वाऽनुदात्तत्वं धातोरेव स्वरोऽवशिष्यते धातोरित्यनेन विहितो धात्वन्तस्योदात्तत्वरूपः। तस्य च धातुस्वरस्योकारस्योक्तरीत्योदात्तस्य स्थाने सञ्जात गुणौकारस्य स्थानिवत्वेनोदात्तत्वमिति रोचन्ते पदे आदिरुदात्तो द्वितीय तृतीयावचावनुदात्तौ। अत्रशब कारान्तेशब्दाकारयोः पररूपैकादेशोऽनुदात्तद्वयस्थानिक इत्यनुदात्तः। तत्र रोचन्तेशब्दगतानुदात्तद्वयमध्ये प्रथमो ऽनुदात्तो रोरूपोदात्तात्पर इतिस्वरितः। द्वितीयस्तु स्वरितात्पर इति प्रचितः। रोचना। रुच दीप्तावित्यस्माद्धातोरनुदात्ते तश्च हलादेरित्यनेन युचि प्रत्यये योश्च युवोरनाकावित्यनेनानादेशे धातोरुपधायागुणे रोचन शब्दः। ततः प्रथमा बहुवचनेजसि तस्य जश्शसोः शिरितिश्यादेशे तस्य शिसर्वनामस्थानमिति सर्वनामस्थानसंज्ञायां नपुंसकस्य झलच इत्यनेन प्रतिपादिकस्य नुमि सर्वनामस्थाने चासंबुद्धावित्यनेनोपधाया दीर्घे शश्छन्दसीत्यनेन शलोप नलोपः प्रातिपदिकान्तस्येतिनकारलोपे रोचना इतिपदम्। तत्र धातुस्वरं बाधित्वा प्रत्यय स्वरस्तस्यापिबाधकश्चित्स्वरो अत्र भवतीति चित्स्वरेण चित इत्यनेन चिदन्तास्योदात्तत्वबाधनेन रोचना शब्दो ऽन्तोदात्तः। अवशिष्टौ स्वरावनुदात्तौ। तयोः संहितायां स्वरितात्परत्वादाद्यस्य प्रचयो द्वितीयस्य स्वरितात्परत्वेऽपि उदात्तः परः समागत इति अनुदात्तत्वमेवावतिष्ठते। अन्त्यस्याकारस्य दीर्घस्य उदात्त स्थानिकत्वेनोदात्तत्वम्। दिवि। दिवुक्रीडाविजिगीषेत्याद्यर्थकस्य दिव्धातोर्दिवेर्डिविरित्यनेनौणादिकेन डिविप्रत्यये टेर्लोपि दिवशब्दः तस्मात्सप्तम्येकवचने ङौ प्रत्यये दिविपदम्। तत्र प्रत्ययस्वरेणादिव्शब्दोऽन्तोदात्तः। ङेः प्रत्ययस्य सुप्त्वेन आद्युदात्तश्चेति प्रत्ययत्वनिबन्धनमाद्युदात्तत्वंबाधित्वा विशेषविहितमनुदात्तत्वं प्राप्तं तस्यापि प्रकृते ऊडिदं पदाद्य प्पु त्रै द्युभ्यः इत्यनेनोदात्तत्वविधानादुदात्तत्वं शेषनिघातेनादेरनुदात्तत्वं दिव् शब्दे।

द्वितीयमृचमाह—

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।
शोणा धृष्णू नृवाहसा ॥ २ ॥

युञ्जन्ति । अस्य । काम्या । हरी इति । विऽपक्षसा । रथे ।
शोणा । धृष्णू इति । नृऽवाहसा ॥ २ ॥

अस्य ब्रध्नादिशब्दप्रतिपाद्यस्यादित्यादिमूर्त्तिभिस्तत्र तत्रावस्थितस्येन्द्रस्य रथे हरी एतन्नामानौ द्वावश्वौ सारथयो युञ्जन्ति । इन्द्रसंबंधिनोरश्वयोर्हरिनामत्वम् "हरी इन्द्रस्य, रोहितोऽग्नेरि"ति । (निघ० १।१५) पठितत्वात् । कीदृशौ हरी ? काम्या कामयितव्यौ । विपक्षसा विविधे पक्षसी रथस्य पार्श्वौ ययोरश्वयोस्तौ विपक्षसौ । रथस्य द्वयोः पार्श्वयो-र्योजिताविल्यर्थः । शोणा रक्तवर्णौ । धृष्णू प्रगल्भौ । नृवाहसा नृणां पुरुषाणामिन्द्र-तत्सारथिप्रमुखानां वोढारौ ॥

अस्य ब्रध्नमित्युक्तस्य परामर्शो "दिदमाऽन्वादेशेऽशनुदात्तस्तृतीयादौ ।" (पा० २।४।३२) इत्यश् । शित्त्वात् । सर्वादेशोऽनुदात्तः । विभक्तिरनुदात्तैवेति सर्वानुदात्तत्वम् । काम्या । कमु कान्तौ । "कमेर्णिङ्" (पा० ३।१।३०) कामयते "रचो यत्" (पा० ३।१।९७) तित्स्वरिता-पवादत्वेन "यतोऽनाव" (पा० ६।१।२१३) इत्याद्युदात्तत्वम् । "सुपां सुलुगि"ति द्विवचनस्य डादेशः । हरतो रथमिति हरी । "हृपिषी"त्यादिना (उ ४।१२०) इन् । नित्त्वादाद्युदात्तः । विपक्षसा । "पचिवचिभ्यां सुट् (उ० ४।२७९) इति पचेरसुन् । सुडागमः । विभिन्ने पक्षसी पार्श्वौ ययोस्तौ । विशब्दो निपातत्वादुदात्तः । पूर्वपदप्रकृतिस्वरेण स एव शिष्यते । द्विवचनस्य डादेशः । रथे । रमन्तेऽस्मिन्निति रथः । "रमु क्रीडायाम्" । "हनिकुषि-रमिकाशिभ्यः क्थन्" । (उ० २।२) इति क्थन् । कित्त्वा "दनुदात्तोपदेशे" त्यादिना (पा० ६।४।३७) मकारलोपः । नित्स्वरेणाद्युदात्तः । शोणा । "शोणृ वर्णगत्योः" । गमन-करणत्वात्करणे घञ् । ञित्त्वादाद्युदात्तः । "सुपां सुलुगिति" डादेशः । धृष्णू । "ञिधृष प्रागल्भ्ये" "त्रसिगृधिधृषिक्षिपेः क्नुः" (पा० ३।२।१४०) कित्त्वाद्गुणाभावः । प्रत्ययस्वरः ।

नृवाहसा। नृन्वहत इति वहे "वहिहाधाञ्भ्यश्छंदसि" (उ० ४।२२०) इत्यसुन्। "णिदि" त्यनुवृत्तेर्वृद्धिः। कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते ॥२॥*

---

* युञ्जन्ति। युजिर्योगे इति रौधादिकाद्युज्धातोः कर्तरि वर्तमाने लटि लटः प्रथमपुरुष बहुवचने झिप्रत्यये तदवयवस्य झस्यान्तादेशे मध्ये शप्वादे श्नमि प्रत्ययत्वेऽपि मित्करणादन्त्यादचः परे श्नसोरल्लोप इत्यनेन श्नप्रत्ययाकारस्य लोपे नकारस्यानुस्वारपरसवर्णयोर्युञ्जन्तिइति रूपम्। तत्र धातुस्वरं बाधित्वा झिप्रत्यय-स्वरस्य प्रवृत्तिः साचान्तादेशोत्तरमित्यन्त्यकारस्योदात्तत्वे शेषेनिघातेनावशिष्टयोरनुदात्तत्वे युञ्जतिपदे आद्यन्तावनुदात्तौ मध्य उदात्तः। तत्राप्यन्त्यस्योदात्तात्परत्वात्स्वरितः। संहितायामस्यशब्दीयानुदात्ताकारेण तिशब्दस्य यणि तस्यापि पूर्ववदेव स्वरितत्वम्। अस्य। इन्देः कमिनलोपश्च इत्यनेन इन्दिधातोः कमिप्रत्यये न लोपे च इदंशब्दः। इणोदमक इति केन चन मतेन इष्टधातो दमका वा इदंशब्दः। तत-स्तस्मादिदंशब्दात्षष्ठीविभक्तेरेकवचने ङसिपरेऽत्रेदंशब्दस्यान्वादेशविषयत्वेन इदमोन्वादेशेऽशनुदात्तस्तृतीयादौ इत्यनेनाशादेशे टाङसीतिङस्स्यादेशे अस्येतिपदम्। तत्रेदमोमक्प्रत्ययस्य वा दमक् प्रत्ययस्य स्वरेणान्तो-दात्तेपि अत्राशादेशेस्यानुदात्तत्वोक्तेरनुदात्तत्वं प्रत्ययस्यङिसोऽपि सुप्त्वेनानुदात्तत्वमिति तत्स्थानिकस्यस्या-देशस्यापि स्थानिवद्भावेनानुदात्तत्वेऽस्येत्येतदुभयानुदात्तंपदम्। तस्य संहितायामाद्यस्योदात्तः। तत्परत्वा-त्स्वरितोऽन्त्यस्य तु उदात्तः परइति सन्नतरः। कामया। कमुकान्तौ इत्यस्माण्णिङि तदन्तादचोयदिति यत्प्रत्यये णेर्लोपे काम्येतिशब्दः। तस्माद्द्वितीया द्विवचनस्य सुपांसुलुगितिडादेशे डित्वाट्टेलोपे काम्या शब्दः। तत्रधातुस्वरं बाधित्वा प्रत्यय सामान्यस्वरः प्राप्तो यतः प्रत्ययस्य तित्करणेन तित्त्वनिबन्धनेन तित्स्वरितमिति स्वरेण स निवर्त्यते। तस्यापि तित्स्वरस्य यतोऽनावइत्यनेन निवर्तनात्प्रकृते सतिशिष्टेन तेन यतोऽनाव इति स्वरेण यदन्तद्व्यच्काद्युदात्तरूपेणावस्थीयते इति काम्यशब्दआद्युदात्तः। ततो द्वितीया द्विवचनस्य सुप्त्वेन तत्स्थानिकडादेशस्यापि स्थानिवत्त्वेन सुप्त्वादनुदात्तौ सुप्पिनावित्यनेनानुदात्तत्वम्। इति काम्या शब्द आद्युदात्तः। अन्त्यस्यानुदात्तस्योदात्तात्परत्वादुदात्तादनुदात्तस्य स्वरित इत्यनेन स्वरितत्वम्। संहितायांतु हरीशब्दीयउदात्तः पर इति उदात्तः। स्वरितपरस्य सन्नतर इत्यनेन अनुदात्तापरपर्यायः सन्नतरः। हरी। हृञ् हरणे इत्यस्माद्धातोः "हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च" त्यौणादिकेनसूत्रेण इन्प्रत्ययः। ततो द्वितीयाद्विवचनेऔटि प्रथमयोःपूर्वसवर्ण इति पूर्वसवर्ण दीर्घे हरीइतिपदम्। तत्र हृधातोरन्त उदात्तः इन् प्रत्ययस्य प्रत्ययत्वनिबन्धनेनाद्युदात्तश्चेत्यनेन निवर्त्यते सोऽपि प्रत्यय सामान्यस्वर इन्प्रत्ययगतेन नित्त्वेन तत्प्रयुक्तस्वरेण निवर्त्यते इति हरिशब्दो नित्स्वरेण ञ्नित्यादिर्नित्यमित्यनेन निदन्तादिस्वरस्योदात्तत्वबाधकेना-द्युदात्तः। द्वितीयाद्विवचनस्य सुप्त्वेनानुदात्तत्वम्। तस्य हरिशब्दीयेकारेणानुदात्तेन सहपूर्वसवर्ण दीर्घैका-देशोऽनुदात्तद्वयस्थानिक इति स्थानिवत्त्वेनानुदात्तः। तस्य केवलपदावस्थायां पूर्ववर्तिहाकाररूपोदात्तात्परत्वेनो-दात्तादनुदात्तस्येति स्वरितः। पदपाठेतु हरीइत्येतस्य पदस्य द्वितीया द्विवचनान्तत्वेन दीर्घेकारान्तत्वेन ईदूदेद्द्विवचनं प्रगृह्यमिति सञ्जात प्रगृह्य संज्ञावत्त्वात्प्रगृह्यत्वप्रदर्शनायेतिशब्दयोगस्य पदपाठेऽनुसरणेनात्रापि इति शब्दयोगः। इतिशब्दश्च निपातत्वादाद्युदात्त इति तदीयादिरुदात्तः पर इति हरीशब्दान्त्यस्यो-दात्तस्वरितपरस्य सन्नतर इति सन्नतरः। एवं संहितायामपि विपक्षसाशब्दीयोदात्तविशब्देकार परत्वेनोक्त-वत्सन्नतरः। विपक्षस। पच् धातोः "पचि वचिभ्यां सुट्च" इत्यौणादिकेन सूत्रेणासुन् प्रत्ययः सुडागमश्च। धातोरन्त्यस्य कुत्वे सुटः सकारस्य षत्वे कषयोगे क्षरूपवर्णादेशे पक्षःशब्दः। तस्य विशब्देन बहुव्रीहिः

स्क०—युञ्जन्ति सारथयोऽस्येन्द्रस्य स्वभूतौ काम्या कामयितव्यावुत्कृष्टौ कामसंवादिनौ वा हरी अश्वौ। विपक्षसा सव्य दक्षिणभेदेन विभिन्नौ रथपक्षौ ययोस्तौ विपक्षसौ सकारश्छान्दस उपसर्जनम्। पर्यायान्तरं वा पक्षशब्दो द्रष्टव्यः। रथस्य सव्यदक्षिणपार्श्वस्थावित्यर्थः। क युञ्जन्ति। रथे। कीदृशौ। शोणा रक्तवर्णौ। धृष्णू प्रगल्भौ। अभिभवितारौ शत्रूणाम्। नृवाहसा मनुष्यान् प्रति मनुष्याकारस्य वेन्द्रस्य वोढारौ ॥२॥

वे०—युञ्जन्त्यस्य। युञ्जन्त्यस्य रथे कमनीयौ (पार्श्वे) अश्वौ सव्यदक्षिणयोः पार्श्वयोः-युज्यमानौ शोणवर्णौ शत्रूणां धर्षकौ नेतुरस्य वोढारौ देवाः ॥२॥

---

ततो द्वितीयाद्विवचनस्य सुपांसु लुक पूर्वसवर्णाच्छेयाडाड्यायाजाल इति सूत्रेण डादेशे विपक्षसा इति रूपम्। तत्र विशब्दस्य निपातत्वान्निपाता आद्युदात्त इत्यनेनाद्युदात्तत्वम्। पक्षस्शब्दे धातोः स्वरः प्रत्ययस्वरेण सोऽपि नित्स्वरेण निवर्त्यत इति नित्स्वरेण ञ्नित्यादिर्नित्यमित्यनेन निदन्तादेरुदात्तत्वम् इति सादिरुदात्तः। बहुव्रीहौ समासस्येत्यनेन समासान्तोदात्तत्वे प्राप्ते तदपवादेन बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदस्य प्रकृतिस्वरत्वे विपक्षः शब्द आद्युदात्तः। शेषनिघातेन अवशिष्टानांमनुदात्तत्वं ततो द्वितीया द्विवचनस्यापि सुप्त्वेनानुदात्तत्वात्तत्स्थानिकडादेशस्यापि स्थानिवत्त्वेनानुदात्तत्वमिति विपक्षसाशब्दे द्वितीयादयः सर्वेऽचोऽनुदात्ताः। तत्रापि आदेरुदात्तात्परत्वाद्द्वितीयः स्वरितत्वं गच्छति उदात्तादनुदात्तस्यस्वरित इत्यनेन। तृतीयचतुर्थौ तु पदपाठे स्वरितात्पराविति प्राचिनौ। संहितायामन्त्यस्य रथे शब्दीयोदात्तराकारः पर इति सन्नतर इति विशेषः। रथे। रमु क्रीडायामिति धातोः "हनि कुषिनीरमिकाशिभ्यः क्थन्" इत्यौणादिकेन सूत्रेणक्थन् प्रत्यये किन्वात् "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक लोपो झलि क्ङिति" इति सूत्रेणधातोरन्त्यस्य लोपे रथ शब्दः। तस्मात्सप्तमी वहुवचने ङौ प्रत्यये गुणे रथे इतिपदम्। तत्र धातोरिति सूत्रेण धात्वन्तस्योदात्तः प्राप्तः, प्रत्ययस्याद्युदात्तश्चेत्यनेनादिरुदात्तः प्राप्तस्तद्बाधनेन प्रत्ययगतनित्त्वव-शान्नित्स्वरेण रथशब्द आद्युदात्तः शेषानिघातेनान्तानुदात्तश्च। तस्यान्तानुदात्तस्योदात्तात्परत्वात्स्वरितत्वम्। शोणा। शोणृवर्ण गत्योरितिधातोः करणेऽर्थे करणाधिकरणयोश्चेत्यनेन ल्युटि प्राप्ते बाहुलकाद्घञ्। तस्मा द्वितीयाद्विवचनस्य पूर्ववड्डादेशः। तत्र धातुस्वरमुपमर्घ प्रत्ययस्वरः प्राप्तस्तमपि ञ्नित्स्वर उपमर्दयति इति ञित्ववशतो ञ्नित्यादिर्नित्यदिनित्येमित्यनेन ञिदन्तादेरुदात्तत्वाच्छोणशब्द आद्युदात्तः। डादेशस्योक्तवदनुदात्त-त्वम्। सवर्ण दीर्घस्यानुदात्तद्वयस्थानिकत्वादनुदात्तत्वं स्थानिवत्त्वात्। तस्योदात्तात्परत्वात्स्वरितः। धृष्णा। ञिधृषा प्रागल्भ्ये इतिधातोस्त्रसिगृधिधृषि क्षिपेः क्नु रि"ति सूत्रेण क्नुप्रत्ययः कित्त्वाद्गुणनिषेधे धृष्णुशब्दः। तत्र धातुस्वरंबाधित्वा प्रत्यय स्वरस्य आद्युदात्तश्चेस्यवृत्तिरितिधृष्णुशब्दोऽन्तोदात्तः शेषानिघातेन आदेरनु-दात्तत्वम्। ततोद्वितीयाद्विवचनस्य प्रथमयो पूर्वसवर्ण इति पूर्व सवर्ण दीर्घः। तत्र द्वितीयाद्विवचनस्य सुप्त्वादनुदात्तत्वम्। तस्य पूर्वेण धृष्णुशब्दीयोदात्तोकारेण सवर्ण दीर्घे एकादेश उदात्तेनोदात्त इति सवर्ण दीर्घ उदात्तः। पदपाठे इति शब्दयोगः प्रगृह्यत्वात्। नृवाहसा। नृधातोर्वानृधातोर्नृत्तुप्रत्ययेडिनि नृशब्द-साचप्रत्यय स्वरः वाहः शब्दे वहधातोर्वहिहाधाञ्भ्यश्छन्दसि इति औणादिकेन सूत्रेणासुन्प्रत्ययोणि-द्वन्नाश्चेति णित्वनिमित्तकोपधा वृद्ध्या वाहः शब्दः। नृवाह शब्दयो उपपद समासे ततो द्वितीयाद्विवच-नस्य सुपामिति डादेशे नृवाहसाइति पदम्। तत्र धातुस्वरंबाधित्वा प्रत्ययस्वरस्यस्यादिति स्वरेण बाधः क्रियत इति वहधातोरकारएवोदात्तः। तत्स्थानिक वृद्धाकारस्योदात्तस्थानिकत्वात्स्थानिवत्त्वेनोदात्तत्वम्।

तृतीयामृचमाह

केतुम् कृण्वन्नकेतवे पेशो मर्या अपेशसे ।

समुषद्भिरजायथाः ॥ ३ ॥

केतुम् कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे ।

सं । उषत्ऽभिः । अजायथाः ॥ ३ ॥

हे मर्या = मनुष्या इदमाश्चर्यं पश्यतेत्यध्याहारः। किमाश्चर्यमिति तदुच्यते। आदित्यरूपोऽयमिन्द्र उषद्भि = र्दाहकैः रश्मिभिः प्रतिदिनमुषःकालैर्वा संभूयाजायथाः उदपद्यत। अथवा सूर्यस्यैवास्तसमये मरणमुपचर्य व्यत्ययेन बहुवचनं कृत्वा संबोधनं क्रियते। हे मर्य प्रतिदिनं त्वमजायथा इति योज्यम्। किं कुर्वन्। अकेतवे रात्रौ निद्राभिभूतत्वेन प्रज्ञानरहिताय प्राणिने केतुं कृण्वन्। प्रातः प्रज्ञानं कुर्वन्। अपेशसे रात्रावन्धकारावृतत्वेनानभिव्यक्तत्वाद्रूपरहिताय पदार्थाय प्रातरन्धकारनिवारणेन पेशो रूपमभिव्यज्यमानं कुर्वन् ॥

"पेश इति रूपनाम पिंशते"रिति [नि० ८।११] यास्कः। अकेतवेऽपेशस इति चतुर्थ्यौ षष्ठ्यर्थे द्रष्टव्यौ। केतुम्। प्रातिपदिकस्वरः। कृण्वन्। "कृवि हिंसाकरणयोश्च"। लटः शत्रादेशः। "इदितो नुम् धातोः" [पा० ७।१।५८] इति नुमागमः। कर्तरि शपि प्राप्ते "धिन्विकृण्व्योरच" (पा० ३।१।८०) इत्युप्रत्ययः। सत्संनियोगेन वकारस्य चाकारः। "अतो लोपः" (पा० ६।४।४८) इत्यकारलोपः। तस्य स्थानिवद्भावात्पूर्वस्य लघूपधगुणो न भवति। अकारस्य प्रत्ययस्वरेणोदात्तत्वम्। अकेतवे। बहुव्रीहौ "नञ्सुभ्याम्। (पा० ६।२।१७२) इत्युत्तरपदान्तोदात्तत्वम्। पेशः। "नब्विषयस्यानिसन्तस्य" (फि० २।३) इत्याद्युदात्तः। मर्याः। "छन्दसि निष्टर्क्य"त्यादौ (पा० ३।१।१२३) म्रियतेर्निपातः। आमन्त्रितनिघातः। असामर्थ्यात्पूर्वस्य न पराङ्गवद्भावः। अपेशसे। "नञ्सुभ्यामि" (पा० ६।२।१७२)

समासे समासान्तोदात्तत्ववाधकेन गतिकारकोपपदकृदित्यनेन कृदुत्तरपदस्य प्रकृति स्वरत्ववाधनेन वाहः शब्दीयो वाकार एवोदात्तः समासेऽपिति नृवाहसः शब्द द्वितीय उदात्तः। विभक्त्यादेशस्य पूर्ववदनुदात्तत्वमिति नृवाहसाशब्द आदिरनुदात्तो द्वितीय उदात्तस्तृतीयोऽनुदात्तोऽप्युदात्तात्परइतिस्वरितश्चतुर्थोऽप्यनुदात्तोऽपि स्वरितात्परइति प्रचितः।

त्युत्तरपदान्तोदात्तत्वम्। सं। निपात आद्युदात्तः। उषद्भिः। "उष प्लुष दाहे"। ज्वलद्भिः रश्मिभिः। लटः शत्रादेशे शपि प्राप्ते व्यत्ययेन शः। "सार्वधातुकमपित्" (पा० १।२।४) इति तस्य ङित्त्वाल्लघूपधगुणो न भवति। शस्य प्रत्ययस्वरेणोदात्तत्वम्। उपरि शतुरदुपदेशाल्लसार्वधातुकानुदात्तत्वम्। एकादेश उदात्तेनोदात्तः। अजायथाः। अजायतेत्यर्थे पुरुषव्यत्यये निघातः ॥३॥*

---

केतुं कृण्वन्

*केतुम्। चायृपूजानिशामनयोरिति भौवादिकाच्चायृधातो "श्चायकि"रित्यौणादिकेन सूत्रेण तु प्रत्ययस्तत्सन्नियोगेन धातोः किरादेशश्च विधीयेते। तौ प्रत्यये धातोरादेशस्य किरूपस्यान्त्येकारस्य गुणे केतुशब्दः। ततो द्वितीयैकवचनेऽमिप्रत्ययेऽमिपूर्वइत्यनेनपूर्वरूपैकादेशे केतुमितिपदम्। तत्र धातोरितिधात्वन्तास्योदात्तइत्युच्यमानउदात्तश्चायधातोराकारस्य प्राप्तः। यद्यपि उक्त सूत्रेणान्त्यस्योदात्त उच्यते आकारश्चनान्त्यस्तथापिस्वरविधौ व्यञ्जनमविद्यमानवदित्युक्त्या व्यञ्जनस्याविद्यमानवद्भावेऽवशिष्टधातुरूपे योऽन्त्यस्तस्यैवान्त्यत्वमर्थसिद्धं तत्राहार्यं रूपमेव। अविद्यमानवदित्युक्त्या वस्तुतस्सतस्तस्याभावाभावेन तत्सत्वेच तद्विशिष्टएवधातुत्वस्यपर्याप्तत्वेन तन्निरूपतान्त्यत्वस्यान्त्यात्पूर्वभाविनिवर्णेऽनौपचारिकत्वेन कथमप्यसत्वात्। तस्मात्स्परे कर्तव्येऽन्त्यव्यञ्जनवर्णरहिते धातुभागे धातुत्वस्यारोपेणानन्त्ये धात्वन्तत्वस्यवारोपेण उक्त शास्त्रस्य प्रवृत्तिरिति तदर्थः। एवं चयकारासत्वेन प्रकृते चाइत्येवधातोरूपमिति तदन्त्य आकार एव धातोरितिसूत्रेणोदात्तत्वेनप्राप्त इति सूक्तम्। प्रत्ययस्यापि आद्युदात्तश्चेति सूत्रेणादेरुदात्तत्वम् प्राप्तम्। अत्रापि उक्तरीत्यैवारोपितमादित्वमुकारेज्ञेयम्। एवं चैकस्मिच्छब्दे द्वयोरपि स्वरयोरुदात्तत्वप्राप्तौ पाणिनिना परिभाषया तत्र नियमउच्यतेऽनुदात्तं पदमेकवर्जमिति। एकस्मिन्पदेऽसति अपवादे एक एवोदात्तोवास्वरितो वाऽवतिष्ठतेऽर्थादवशिष्टाः सर्वेऽनुदात्ताभवन्तीति तदर्थः। तेनैकशेषेऽपरस्यानुदात्तत्वे वक्तव्यैकस्योदात्तत्वशेषःकस्यवाऽनुदात्तत्वमितिविनिगमनाविरहेणानियमे प्रसक्तोकात्यानेन तत्र नियमउच्यते सतिशिष्ट स्वरवलीयस्त्वमन्यत्रविकरणेभ्य इति। सति विद्यमानेऽर्थात्पूर्वशिष्टेस्वरे शिष्टस्यार्थात्पश्चाच्छिष्टस्यस्वरस्यवलीयरूपंभवति विकरणस्वराहित्वेति तदर्थः। पश्चाच्छिष्टस्यवलियस्त्वोत्याऽर्थात्प्रथमशिष्टस्य दुर्बलत्वं प्रतीयते। दुर्बलः प्रवलेन बाध्यत इति लौकिकन्यायस्तदनुरोधेन प्रवलेन पश्चाच्छिष्टैर्न दुर्बलस्य बाध इति प्रवलमेनं वर्जयित्वाऽविशिष्टानामनुदात्तत्वमिति बाधनार्थं पाणिनिना सूत्रविरचितमनुदात्तं पदमेकवर्जमिति तच्चोपरिष्टात्प्रदर्शितम्। एवं चोक्तशेषनिघातपरिभाषया पश्चाच्छिष्टप्रत्ययस्वरं बलवन्तं विहाय पूर्वस्य प्रकृतिस्वरस्यदुर्बलस्यानुदात्तत्वं संपाद्यत इति। धातोराकारस्यानुदात्तत्वेनस्थानिक किरूपादेशस्यापि स्थानिवत्त्वेनानुदात्तत्वं तत्स्थानिकगुणैकारस्यापि उक्तवदेवानुदात्तत्वमिति। केतुशब्दोऽन्तोदात्तआद्यनुदात्तः। तत अमः प्रत्ययस्य सुप्त्वेनानुदात्तत्वे तेनसहकेतुशब्दीयान्त्योकारस्योदात्तस्यामिपूर्व इतिपूर्वरूपैकादेशएकादेशउदात्तेनोदात्त इत्युदात्त इति केतुं शब्द आदिरनुदात्तो द्वितीय उदात्तः। कृण्वन्। कृवि, हिंसाकरणयोश्चेति-भौवादिकात्कृविधातोर्लटि कर्तरि तस्यशत्रादेशे मध्ये प्राप्तं शपं बाधित्वा धिन्विकृण्व्योरच्चेत्यनेनोकारो भवति धातोरकारश्चान्तादेशः। तस्य चोकारेपरतोलोप इति स्थानिवद्भावेनोकारनिमित्तो धातूपधागुणो न भवति। शतरिपरतउकारस्ययणि इदित्त्वान्नत्यणत्वे कृण्वदिति शब्दः। ततः प्रथमैकवचने "सुडनपुंसकस्ये" तिसूत्रेण प्रथमैकवचनस्य सर्वनामस्थानसंज्ञायामुगिदचा-सर्वनामस्थानेऽधातोरित्यनेननुमागने हल्ङ्याभ्य इति

स्क०—मर्य। मर्त्याकार! इन्द्र! अपेशसे रूपवर्जितस्य। प्रज्ञारूपे चात्रप्रदर्शनार्थे। यस्य यदभिलषितं, तस्य तत् तत् सम्पादयन्नित्यर्थः। समुषद्भिः। स शब्दःसहार्थे। उषच्छब्दो-वशकान्तावित्यस्य कान्तिवचनो न वसोऽर्थासम्भवात्। सहकान्तिभिस्त्वमजायथाः जन्मन एव प्रभृति त्वं सर्वस्य सर्वाभिलषितसम्पादी कान्तश्चासीरित्यर्थः। अथवा माध्यमिकाः स्तनयित्नु-लक्षणा वा उषसः; ताभिःसह त्वमजायथाः-जन्मन प्रभृतिः गर्जितेत्यर्थः ॥३॥

प्रथमैकवचनेसोर्लोपे संयोगान्तस्यलोप इति तकारलोपे कृण्वन् इति रूपम्। तत्र धातु स्वरं वाधित्वाशतुः प्रत्ययस्य आद्युदात्तश्चेत्यनेनाद्युदात्तत्वम्। उकारस्य प्रत्ययत्वेनाद्युदात्तत्वस्य सतिशिष्टत्वाच्छतृस्वरेणैव वाधइत्यनु-दात्तता। एवं च शेषनिघातेनादिरनुदात्तः शतुः प्रत्ययस्य स्वरेणचान्तोदात्तः कृण्वञ्छब्दः। अकेतवे। केतुशब्द उपर्युक्तरीत्या प्रत्ययस्वरेणान्तोदात्तत्वम् नञ् निपातत्वादाद्युदात्तः। तयोर्वहुव्रीहौ समासे समासस्येत्यन्तोदात्तः प्राप्तस्तदपवादेन वहुव्रीहौ प्रकृत्यापूर्वपदमित्यनेन पूर्वपदप्रकृतिस्वरः प्राप्तस्तस्याप्यपवादेन। नञ्सुभ्या-मित्यनेनोत्तरपदान्तोदात्तत्वविधानादकेतुशब्दअन्तोदात्तः। ततश्चतुर्थ्यां एकवचने ङेप्रत्यये तन्निमित्तके पूर्वोकारस्य गुणेऽवादेशेऽकेतवे इतिपदम्। तत्र चतुर्थ्येकवचनस्य सुप्त्वेनानुदात्तत्वम्। तन्नि-मित्तकगुणस्योदात्तोकारस्थानिकत्वेन स्थानिवद्भावादुदात्तत्वं तत्स्थानिकावादेशस्यापि तद्वदेवोदात्तत्वमिति अकेतवेशब्दे आदिस्वर द्वयमनुदात्तं तृतीयउदात्तश्चतुर्थोऽनुदात्तः सन् उदात्तात्परत्वात्स्वरितः पदपाठे। संहितायांतुपेशः शब्दीयोदात्तःपर इति तस्यान्त्यस्यानुदात्तस्य उदात्तस्वरितपरस्य सन्नतर इत्यनेन सन्नतरः। पेशः। पिशअवयवे इत्यस्मात्तौदादिकात्पिशधातो सर्वधातुभ्योऽसुन्नित्यौणादिकेनासुनि उपधागुणेपेशः शब्दः। तत्र धातुस्वरस्यप्रत्ययस्वरेण तस्यापि नित्स्वरेण वाधान्निदन्तादेरुदात्तत्ववोधकेन-ञ्नित्यादिर्नित्यमित्यनेन पेशः शब्द आदिरुदात्तः उणादिषु अव्युत्पत्तिपक्षे नण्विपयस्येत्यनेनाद्युदात्तः। शेषनिघातेनचान्तोऽनुदात्तस्तस्योदात्तात्परत्वात्स्वरितः। संहितायां मर्याः शब्दीयमकारःपर इति पेशः शब्दान्त्यसकारस्य रुत्वे उत्वे गुणे पेशो इति रूपम्। तत्रोत्वस्य व्यञ्जनस्थानिकतयाऽनुदात्तत्वं गुणौकार-स्यापि पूर्वोत्तरानुदात्तस्थानिकत्वेनानुदात्तत्वं स्थानिवत्त्वात्। तस्यापि उदात्तात्परत्वात्स्वरितः। मर्याः। मृङ् प्राणत्यागे इत्यस्माच्छब्दात्सिनिष्टक्र्य देवहूयप्रणीयोन्नीयोच्छिष्यमर्येत्यादिसूत्रेण यत्प्रत्ययो निपात्यते गुणश्च। तत्र धातुस्वरं भित्वा प्रत्ययस्वरस्तमपि वाधित्वा नित्स्वरितमितिनित्स्वरः प्राप्तस्तस्याप्यदवादकेन यतोऽनाव इत्यनेनादेरुदात्तत्ववोधनाच्छेनिघातेनान्तोऽनुदात्तः। तस्योदात्तात्परत्वात्स्वरितः। तस्मात्मर्यशब्दात्संवो-धनवहुत्वे प्रथमाया वहुवचने जसि प्रथमयो पूर्वसवर्णदीर्घे मर्याइतिपदम्। तत्रजसः सुप्त्वेनानुदात्तत्वात्तस्य पूर्ववर्ति मर्यशब्दीयान्त्यानुदात्ताकारस्य सवर्णदीर्घैकादेश एकादेशस्यपूर्वोत्तरोभयानुदात्तस्थानिकतया स्थानि-वत्त्वेनानुदात्तत्वम्। तस्यापि पूर्ववत्स्वरितेन मर्याः पदमाद्युदात्तमन्त्यस्वरितं प्राप्तं परन्तु प्रकृतेसम्बोधना-न्तत्वेनामान्त्रित संज्ञावत्त्वात्पदात्परत्वादपादौस्थितत्वाच्च संहितायामामन्त्रितस्य चेत्याष्टमिकेन सर्वानुदात्तत्वे तस्य पूर्ववर्ति पेशोशब्दीयस्वरितौकारात्परत्वादुभयोरप्यचोः प्रचयः स्वरः स्वरितात्परेषामनुदात्तानामित्यनेन। पदपाठेतु सर्वनिघातस्य वाक्यत्वेऽपि अनुसरणात्तस्य पदस्य सर्वानुदात्तत्वम्। विशेषस्त्वियान्यत्संहितायां स्वरितात्परत्वात्प्रचयः। पदपाठेतुस्वरितात्परत्वाभावात्प्रचयाभाव इति। अपेशसे। पिशधातोरवयवार्था-त्सर्वधातुभ्योऽसुनित्यतेनासुनि प्रत्यये धातोरूपधायागुणे पेशशब्दोततोनञा सह वहुव्रीहौ अपेशश्शब्दस्तस्माच्च-तुर्थ्येकवचने ङेप्रत्यये अपेशसे इति पदम्। तत्र धातोरिति प्राप्तं धात्वन्तस्योदात्तस्वरं बाधित्वाप्रत्ययसामान्य

वे०—केतुं कृण्वन्। रात्रौ स्वपतो गतप्रज्ञस्य प्रज्ञोदयं कुर्वन् तमसातिरोहितरूपाणां गवादीनां रूपंचज्ञायते। केतुं कृण्वन् प्रज्ञानरहिताय पेशश्चापेशसे समजायथाः त्वमुषोभिः सह तमिममाश्चर्यमनुष्याणां निवेदयितुं त्वां सम्बोधयन्ति मर्त्या इति ॥३॥

---

स्वरः प्राप्तस्तमपि वाधित्वा प्रत्ययगतञ्नित्वनिमित्तकोञ्नित्यादिर्नित्स्वरमितिस्वरः प्राप्तस्तेन पेशऽशब्दो-निदग्तादिरुदात्त इत्याद्युदात्तः। नञ् निपताआद्युदात्ता इत्यनेनाद्युदात्तः। वहूव्रीही समासस्येत्यन्त उदात्त प्राप्तस्तंवाधित्वा वहुव्रीहौ प्रकृत्यापूर्वपदमिति पूर्वपदस्य प्रकृतिस्वरः प्राप्तस्तस्याप्यपवादेन नञ् सुभ्यामित्य-नेनोत्तरपदान्तस्योदात्तत्वविधानेन स एवस्वर इति अपेशश्शब्दोऽन्तोदात्तः शेषनिघातेनावशिष्टयोरचोरनु-दात्तत्वम्। चतुर्थ्येकवचनस्य सुप्त्वेनानुदात्तत्वेन अपेशसे शब्दे आदिस्वरद्वयमनुदात्तं तृतीय उदात्तः श्चतुर्थोऽनुदात्तः सन्नुदात्ततात्पर इति स्वरितः पदपाठे। संहितायांतु पूर्ववर्त्तिस्वरितात्परत्वादादिस्वरस्य स्वरितात्परेषामनुदात्तमित्यनेन प्रचयः स्वरः द्वितीयस्य तेनैवसूत्रेण प्रचयस्वरे प्राप्ते तदपवादेन उदात्तस्वरित-परस्य सन्नतर इत्येनेन अनुदात्तापरपर्यायः सन्नतर एव भवतीति विशेषः। सम्। निपातत्वान्निपाता आद्युदात्ता इत्यनेनाद्युदात्तः उपसर्गत्वाद्गोपसर्गाश्चामिवर्जमित्यननोदात्तः। उपद्भिः। उपधातोर्लटि तस्य शतरि मध्ये प्राप्तस्य शपोव्यत्ययेन शस्तस्य सार्वधातुकमपिदित्यनेन ङिद्वद्भावाद्वयो न इत्युपच्छब्द-स्तस्मात्तृतीया वहुवचने उपद्भिरिति रूपमिति भाष्यकारः। दशापाद्यांतु "उपसश्चेप्यते" इति वार्तिक-स्योपसशब्दस्य दकारान्तादेशःस्याद्भादौ प्रत्यय इत्यर्थकस्योदाहरणदानावसरे "समुपद्भिः" इत्युदाहरणदानादयं शब्दउपश्शब्दस्य रूपमिति विज्ञायते तेन उपदाहे इति धातो रुपः किञ्च "त्यंणादिकेनासिः प्रत्ययः सच किदित्यर्थकेन सिद्धिरुपः शब्दस्य। ततोभिसि प्रत्यये "उपसश्चेप्यते" इति वार्तिकेनदकारा-न्तादेशे उपद्भिरूपम्। दशपादीकारास्तु "उपः किदिति" उणादिस्थले ""वसःकिदि" निपाठ-माश्रयन्ति। तन्मतेन वसधातोरसि प्रत्यया भवति सच किद्भवतिति वसधातोर्वचस्वपियजादीनां कितिचे" त्यनेन संप्रसारणे संप्रसारणाचेति परस्य पूर्वरूपैकादेशे उपः शब्दसिद्धिः वत्वेन शासिवसिघसीनां चेत्यनेन। ततोभिसि पूर्ववद्रूपम्। तत्र प्रथमकल्पे धातुस्वरं वाधित्वा शतृ प्रत्ययस्वरः प्राप्तस्तस्यापि वाधकेन शप्रत्यय स्वरेणभवितव्ये परन्तु तस्य विकरणत्वेनावलवत्त्वेनवाधकत्वाच्छतुः स्वरस्यावशेषे प्राप्ते तस्य शतुर्लसार्वधातुकत्वेन। दुपदेशात्परत्वेनच तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमन्हि्व ङोरित्यनेनानुदात्तत्वादवाधितत्वाच्च प्रत्ययस्वर एवात्रावतिष्ठते इति उपच्छब्दोऽन्तोदात्तः। द्वितीयेकल्पे धातुस्वरं वाधित्वासिः प्रत्ययस्वरेणा-द्युदात्त इति उपः शब्दोऽन्तोदात्तः। तृतीयकल्पे तु धातु स्वरस्य प्रत्यय स्वरेण वाधने प्रत्ययस्वर एव-विशिष्यते परन्तु प्रत्यये परतो वकारस्य संप्रसारणोकारे तस्य व्यञ्जन स्थानिकत्वेनानुदात्तत्वं तेन सह परवर्त्त्यो-कारस्य शेष निघातेनानुदात्तस्य पूर्वरूपैकादेशे एकादेशास्थानिनोरुभयोराप्यनुदात्तत्वेनैकादेशः स्थानिवत्वेनानु-दात्त इति विशेषः। भिसः प्रत्ययस्य सुप्त्वेनानुदात्तत्वेनोपद्भिः शब्दे आदिरनुदात्तो द्वितीय उदात्तस्तृतीयोऽ-नुदात्त उदात्तात्परत्वात्स्वरितः। अजा यथाः। जनीप्रादुर्भावे इत्यस्मादादादिकाल्लुङि तस्य कर्तरि मध्यम-पुरुषैकवचने आत्मनेपदे थासिमध्येश्यनि लुङ-लङ-लृङ्क्ष्विडागमे ये विभाषेतिधातोरात्वे सवर्णदीर्घेऽ जायथा इति पदम्। तत्र धातुस्वरं थास्प्रत्ययस्वरं निवर्तयति तस्यापि तास्यानुदात्तेदित्यनेनानुदात्तत्वे श्यनः प्रत्ययास्याद्युदात्तश्चेत्याद्युदात्तः प्राप्तः परन्तु अडागमस्य विविश्योदात्तत्व विधानेन तेन श्यन् स्वरवाधः आत्वस्य व्यञ्जन स्थानिकत्वेन सवर्णदीर्घस्य स्थानिवत्वेनानुदात्तत्वं प्राप्त परन्तु अभातिङन्तात्परत्वात्ति ङङतिङ् इत्यनेन सर्वनिघातः। तस्य संहितायां स्वरितात्परत्वात्प्रचयः।

चतुर्थीमृचमाह—

आदह स्वधामनु पुनर्गर्भत्वमेरिरे ।
दधाना नाम यज्ञियम् ॥ ४ ॥

आत् । अह । स्वधाम् । अनु । पुनः । गर्भऽत्वम् । आऽईरिरे ।
दधानाः । नाम । यज्ञियम् ॥ ४ ॥

अत्रास्ति विशेषविनियोगः चतुर्विंशेऽहनि प्रातःसवने ब्रह्मणाच्छंसिशस्त्र आदह स्वधामन्विति द्वे ऋचौ इन्द्रेण सं हि दृक्षस इत्येका। अयं तृचः पलहस्तोत्रियसंज्ञकः। तथा च सूत्रितं "चतुर्विंशे होताजनिष्ट" इति खण्डे "इन्द्रेण सं हि दृक्षस आदह स्वधामन्वित्येका द्वे च" (आ० ७।२) इति। यद्यप्येतदैन्द्रं सूक्तं तथा "प्यादह" त्यादिषु पट्सु मरुतो वर्ण्यन्ते। "प्रायेणैन्द्रं मरुत" इत्यनुक्रमणिकायामुक्तत्वात् (अ० परि० १।२)। आदित्ययमानन्तर्यार्थे निपातः। अहेत्यवधारणार्थः। आदह = वर्षर्तोरनन्तरमेव। स्वधामनु। इतः परं जनिष्यमाणमन्नमुदकं वानुलक्ष्य मरुतो देवा गर्भत्वमेरिरे। मेघ मध्ये जलस्य गर्भाकारं प्रेरितवंतः। जलस्य कर्तारं पर्जन्यं प्रेरितवंतः। प्रतिसंवत्सरमेवं कुर्वन्तीति दर्शयितुं पुनःशब्दः प्रयुक्तः। कीदृशा मरुतः ? यज्ञियं = यज्ञार्हं नाम दधानाः धारयन्तः। सप्तसु गणेषु मरुतामीदृङ्चान्यादृङ्चेत्यादीनि यज्ञयोग्यानि नामान्यत्राम्नातानि (कृ० य० तै० सं० का० ४ प्र० ६ अ०५)। "अन्ध" इत्यादिष्वष्टाविंशतिसंख्याकेष्वन्ननाम "सूर्क रसः स्वधे"ति पठितम्। "अर्ण" इत्यादिष्वेकशतसंख्याकेषूदकनामसु "तेजः स्वधाक्षरम्" इति पठितम्।

आत्। अह। निपातावाद्युदात्तौ। स्वधा। स्वं लोकं दधाति पुष्णातीति स्वधा "आतोऽनुपसर्गे कः (पा० ३।२।३) कृदुत्तरपदप्रकृतिस्वरत्वम्। अनुपुनःशब्दौ निपातावाद्युदात्तौ गर्भस्यभावो गर्भत्वम्। प्रत्यय स्वरः। एरिरे। अन्तर्भावितण्यर्थो "ईर गतावि" त्यस्मादनुदात्तेतः परस्य लिटो झस्य इरेच्। चित्त्वादन्तोदात्तः। "सह सुपा" (पा० २।१।४) इत्यत्र सुपेति योग विभागादाङा सह तिङः समासेऽपि "समासस्य" (पा० ६।१।२२३) इत्यन्तोदात्तत्वम्। "इजादेश्च गुरुमतोनृच्छः" (पा० ३।१।३६) इत्याम् न भवति मन्त्रत्वात्।

अहशब्दयोगान्निघाताभावः। "तुपश्यपश्यताहैः पूजायाम्" (पा० ८।१।३९) इति निषेधात्। दधानाः। शानचश्चित्त्वादन्तोदात्तत्वे प्राप्ते "अभ्यस्तानामादिः" (पा० ६।१।१८९) इत्याद्युदात्तत्वम्। यज्ञमर्हति यज्ञियम्। "यज्ञर्त्विग्भ्यां घखञौ" (पा० ५।१।७१) इति घप्रत्ययः। "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" (पा० ७।१।२) इतीयादेशः। प्रत्ययस्वरेणेकार उदात्तः ॥४॥

स्क० षडादहस्वधामिति मारुत्योऽनन्तरा ऋचः सुरूपकृत्नुमित्यैन्द्रमामेधातिथेरित्यैन्द्रत्वे प्राप्तेऽयमपवादः। आदहस्वधामित्येताः षडन्तरा मरुद्देवता वीलुचिदारुजत्नुभिरित्यस्या देवतान्तरोपदेशात्-तद्वर्जमन्याः पञ्च मारुत्यः प्रतीयेरन्। तन्निवृत्त्यर्थमनन्तरवचनम्। आच्छब्दोऽथशब्दपर्याय आनन्तर्ये। अहेतिविनिग्रहार्थीय एव शब्दस्यार्थे। स्वधा-इत्युदकनाम। अनु पश्चादर्थे। कस्य पश्चात्। सामर्थ्याद्वृष्टेः। एवं सम्बन्धयोजनात् वृष्टेः पश्चादेवोदकं पुनर्गर्भत्वमेरिरे। ईरगतावित्यस्य ण्यन्तस्येदं रूपम्। गमयन्त्यापादयन्ति मरुतः। पुनश्शब्दश्चातीतसंवत्सरगर्भत्वापादनापेक्षः। एतदुक्तं भवति—वार्षिकांश्चतुरो मासान् वर्षित्वा तदनन्तरमष्टौ मासांस्तदुदकं रश्मिभिः प्रत्याहृत्य तदागामि संवत्सरे वर्षितुं पुनर्गर्भमापादयन्ति मरुत इति। एवमेकवाक्यता—वृष्टेः पश्चादनन्तरमेव मस्यलक्षणमन्नं पुनर्गर्भत्वमेरिरे मरुतो ददतः उदकं यज्ञसम्पादि एतदुक्तं भवति—वर्षाण्योषधीर्जनयित्वा न तावत्येव कृतार्था भवन्ति मरुतः। किन्तर्हि ता एव पुनर्गर्भयन्ति उदकदानेनेति ॥४॥

वे०—आदहस्वधाम्। अनन्तरमेव वृष्टेर्मरुतः-अन्नार्थं पुनरपि गर्भत्वं प्राप्नुवन्ति। अष्टौ मासास्तिरोभूत्वा वर्त्तन्ते वर्षाभ्योऽनन्तरम्। आश्चर्ये अहशब्दः। दधाना नामयज्ञानामीदृक् चातादृक् चेत्यादिकम् ॥४॥

पञ्चमीमृचमाह

वीलु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः।
अविन्द उस्रिया अनु ॥ ५ ॥

वीलु। चित्। आरुजत्नुऽभिः। गुहा। चित्। इन्द्र। वह्निऽभिः।
अविन्दः। उस्रियाः। अनु ॥ ५ ॥

अस्ति किञ्चिदुपाख्यानम्—पणिभिर्देवलोकाद्गावोऽपहृता अन्धकारे प्रक्षिप्ताः, ताश्चेन्द्रो मरुद्भिः सहाजयदिति। एतच्चानुक्रमणिकायां सूचितम् (अ० ८।६।१)। "पणिभिरसुरैर्निगूळ्हा

गा अन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितामयुग्भिः पणयो मित्रीयन्तः प्रोचुरिति" (अनु० १०।१०८) मन्त्रांतरे च दृष्टान्ततया सूचितम्। "निरुद्धा आपः पणिनेव गाव" इति। (ऋ० १।३२।११) तदेतदुपाख्यानमभिप्रेत्योच्यते। हे इन्द्र वीलु चित् दृढमपि दुर्गमस्थानमारुजत्नुभिर्भञ्जद्भिर्वह्निभिर्वोढृभिरन्यत्र नेतुं समर्थैर्मरुद्भिः सहितस्त्वं गुहा चित् गुहायामपि स्थापिता उस्रिया गां अन्वविन्दः अन्विष्य लब्धवानसि।

"ओजः पाज" इत्यादिष्वष्टाविंशति संख्याकेषु बलनामसु "दक्षो वीलु च्यौत्नम्" इति पठितम्। नव संख्याकेषु गोनाम"स्वन्ध्योस्रोस्रिये"ति पठितम्। वीलु। प्रातिपदिकस्वरः। चित्। चादिरनुदात्तः। आरुजत्नुभिः। "रुजो भङ्गे" इत्यौणादिकः कत्नुच्प्रत्ययः। कित्त्वाद्गुणाभावः। चित्त्वादन्तोदात्तत्वम्। समासे कृदुत्तरपदप्रकृतिस्वरत्वम्। गुहा। सप्तम्याडादेशः। "ग्रामादीनां च" (फि० २।१५) इत्याद्युदात्तः वह्निभिः "वहिश्रिश्रयुद्रुग्लाहात्वरिभ्यो नित्" (उ० ४।५२) इति वहेर्निप्रत्ययः। पित्त्वादाद्युदात्तः। अविन्दः। "शे मुचादीनाम्" (पा० ७।१।५९) इति नुमागमः। "लुङ्लङ्लृङ्क्ष्वडुदात्तः" (पा० ६।४।७१) वसन्तीत्युस्रियाः। वसेः कर्तरि रियक्प्रत्ययः। पत्वाभावश्च बाहुलकादूहनीयः। उक्तं हि "यत्र पदार्थविशेषसमुक्तं प्रत्ययतः प्रकृतेश्च तदूह्यमि"ति। इकार प्रत्ययस्वरेणोदात्तः॥ ५॥ ११॥

॥ इति प्रथमस्य प्रथम एकादशो वर्गः॥

स्क०—एका वीलुचिदिन्द्राय मरुद्भिः सहगीयते। न केवलं मरुद्भ्यः। ऐन्द्र मारुतीयं न मारुत्येव केवलेत्यर्थः। वीलयतेः संस्तम्भ कर्मणो वीलु दृढम्। चिच्छब्दोऽप्यर्थे। दृढमपि पर्वतादि आरुजत्नुभिः। रुजो भङ्गे। सहयोगलक्षणा चेयं तृतीया। भञ्जद्भिर्मरुद्भिः सह। गुहाचित् गुहायामपिस्थिता। हे इन्द्र! कीदृशैर्मरुद्भिः। वन्हिभि वोढृभिः। अविन्दः लब्धवानसि। काः। उस्रियाः—देवानां स्वभूता गाः। अनुपश्चात्। कस्य। सामर्थ्यात् सरमा प्रत्यागमनस्य। पणिभिरसुरैरपहृताः-गागुहायांनिहिताः सरमाप्रत्यागमनोत्तरकालं मरुद्भिः सह त्वमलब्धा इत्यर्थः॥५॥

॥ इति प्रथमस्य प्रथम एकादशो वर्गः॥

वे०—वीलुचित्। दृढमपि पर्वतसान्वाभिमुख्येनमञ्जद्भिः पर्वतस्यगुहायामपि इन्द्र! त्वां वोढृभिर्मरुद्भिस्त्वं पणिभिरपहृता गा अन्वविन्दः॥५॥

॥ इति प्रथमस्य प्रथम एकादशो वर्गः॥

युञ्जन्तीति सूक्ते षष्ठीमृचमाह—

देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः ।
महामनूषत श्रुतम् ॥ ६ ॥

देवऽयन्तः । यथा । मतिम् । अच्छ । विदत्ऽवसुम् गिरः ।
महाम् अनूषत । श्रुतम् ॥ ६ ॥

देवयन्तो मरुत्संज्ञकान्देवानिच्छन्तो गिरः स्तोतार ऋत्विजो महां प्रौढं मरुद्गणमच्छ=प्राप्तमनूषत =स्तुतवन्तः । कीदृशं मरुद्गणम् ? विदद्वसुम्=वेदयद्भिः स्वमहिमप्रख्यापकैर्वसुभिर्धनैर्युक्तं । श्रुतं=विख्यातं । मरुद्गणस्य दृष्टान्तः । यथा मतिं । मातारमिन्द्रं यथा स्तुवन्ति तथेत्यर्थः ॥

देवयन्तः । देवानात्मन इच्छन्तः । "सुप आत्मनः क्यच्" (पा० ३।१।८) "क्यचि च" (पा० ७।४।३३) इतीत्वम् "अकृत्सार्वधातुकयोर्दीर्घः" (पा० ७।४।२५) इति दीर्घत्वं च न भवति "न छन्दस्य=पुत्रस्य (पा० ७।४।३५) इत्यनेन क्यचि यत्प्राप्तमीत्वं दीर्घत्वं वा तस्य सर्वस्य प्रतिषेधात् । यद्यपीत्वमेव प्रकृतं तथापि व्यवहितस्यापि दीर्घत्वस्य स प्रतिषेध इति विज्ञायते । "अश्वायन्त" इत्यादा "वश्वाघस्यात्" (पा० ७।४।३७) इत्यात्वविधानादिति ह्युक्तम् । क्यजन्ताच्छतृप्रत्ययः । क्यचश्चित्वा"चित" इत्यन्तोदात्तत्वम् शपः पित्त्वेन शतुश्च ल सार्वधातुकस्वरेणानुदात्तत्व "एकादेश उदात्तेनोदात्त" इत्युदात्तः । यथा "प्रकारवचने थाल" (पा० ५।३।२३) "लिती"ति प्रत्ययात्पूर्वमुदात्तत्वम् । मतिम् । "मन्त्रे वृषेषपचमन" इत्यादिना (पा० ३।३।९६) क्तिन्नुदात्तः । मतिशब्दो ज्ञानपरोऽप्युपचाराज्ज्ञातरीन्द्रे वर्तते । अथवा पदान्तरे विशेष्यानुपादानादिन्द्रस्यैषा संज्ञा । ततश्च "क्तिच्क्तौ च संज्ञायाम्" (पा० ३।३।१७४) इति मन्यतेः कर्तरि क्तिच् । तस्योपदेशेऽनुदात्तत्वादिट्प्रतिषेधः चित्त्वादन्तोदात्तत्वम् अच्छ । अध्याहृतगच्छत्यर्थयोगा"दच्छ गत्यर्थवदेषु" (पा० १।४।६९) इति गतिसंज्ञया सह निपातसंज्ञाया अपि समावेशात् "निपाता आद्युदात्ताः फि० ४।१२ इत्याद्युदात्तत्वम् । विदद्वसुम् । "विद ज्ञाने" इत्यस्मादन्तर्भावितण्यर्थाच्छतृप्रत्यये विदन्त्यौदार्यातिशयवत्तया ज्ञापयन्ति वसूनि धनानि यं स विदद्वसुः । विदेः शतृप्रत्यये-

"ऽदिप्रभृतिभ्यः शपः" (पा० २।४।७२) इति शपो लुकि प्रत्ययस्वरेण शतुरुदात्तत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते। गृणन्ति स्तुवन्तीति गिरः। गृणातेः क्वि "ऋृत इद्धातोः" (पा० ७।१।१००) इतीत्वम्। रपरत्वम्। धातुस्वरेणोदात्तत्वम्। महाम्, महान्तम्। नकारतकारयोर्लोपश्छान्दसः। प्रातिपदिकस्वरेणोदात्तत्वम्। अनूषत। "णु स्तुतौ"। व्यत्ययेनात्मनेपदम्। लुङि झस्यादादेशः सिचि कुटादित्वेन ङित्त्वाद् गुणाभावः। इडभाव उकार दीर्घत्वं च छान्दसम्। निघातः। श्रुतम्। प्रत्ययस्वरः ॥६॥

स्क०—देवशब्दोऽत्र प्रकृतान् मरुत एवाह। तानिच्छन्तो देवयन्तः। यथामतिम्। मन्यतिरर्चतिकर्मा। मन्यते स्तूयतेऽसाविति मतिरिन्द्रः, ज्ञाता वा मतिर्विद्वान् ब्राह्मणः। यथा सर्वस्तुत्यमिन्द्रं विद्वांसं वा ब्राह्मणं तद्वत्। अच्छ। निपातोऽयमाभिमित्यस्यार्थे। लब्धधनं मरुद्गणं। गीर्भि स्तुतिभिर्महान्तमिन्द्रं अनूषत। स्तुवन्ति स्तुवन्तु वा ऋत्विजो मत्पुत्रपौत्रादयो वा। श्रुतं ख्यातम् ॥६॥

वे० देवयन्तः। देवानिच्छन्तोयथा पूजनीयमिन्द्रमभिष्टुवन्ति, विद्वसुं वेदयद्वसु मुदारं गिरः स्तोतारोमहान्तं मरुद्गणमिति ॥६॥

सप्तमीमृचमाह—

इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा।

मंदू समानवर्चसा ॥ ७ ॥

इन्द्रेण। सं। हि। दृक्षसे। संऽजग्मानः। अबिभ्युषा।

मंदू इति। समानऽवर्चसा ॥ ७ ॥

हे मरुद्गण ! त्वमिन्द्रेण संजग्मान=संगच्छमानः संदृक्षसे हि। सम्यग्दृश्येथाः खलु। अवश्यमस्माभिर्द्रष्टव्य इत्यर्थः। कीदृशेनेन्द्रेण ? अबिभ्युषा=भीतिरहितेन। कीदृशाविन्द्रमरुद्गणौ ? मन्दू=नित्यप्रमुदितौ। समानवर्चसा=तुल्यदीप्ती। पुरा कदाचिद् वृत्रवधदशायामिन्द्रस्य सखायः सर्वे देवा वृत्रश्वासेनापसारिताः, तदानीमिन्द्रस्य वृत्रसंबन्धिसकलसेनाजयार्थं मरुद्भिः संगमोऽभूत्। सोऽयमर्थो "वृत्रस्य त्वाश्वसथादि"ति मन्त्रे संगृहीतः "इन्द्रो वै वृत्रं हनिष्यन्निति" ब्राह्मणे प्रपञ्चितश्च॥ इन्द्रशब्द परमैश्वर्यवन्तं मरुद्गणं

वाभिधत्ते। तदानीमिन्द्रस्य सम्बोधनं बहिरेवाध्याहर्तव्यम्। तथा चेयमृग्यास्केन व्याख्याता "इन्द्रेण हि संदृश्यसे संगच्छमानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोपि वा मन्दुना तेनेति स्यत्समानवर्चसेत्येतेन व्याख्यातम्" (नि० ४।१२) इति॥

संदृक्षसे। संपश्येथाः। दृशेश्चेति वक्तव्यम् (पा० १।३।२९।२) इत्यात्मनेपदम्। दृशे-"र्लिङर्थे लेट्" इति प्रार्थनायां लेट्। "थासः से" (पा० ३।४।८०) "लेटोऽडाटौ" (पा० ३।४।९४) इत्यडागमः। "सिब्बहुलं लेटि" (पा० ३।१।३४) इति सिप्। "संज्ञापूर्वको विधिरनित्य" इति गुणाभावः। व्रश्चादिना षत्वम्। "षढोः कः सि" (पा० ८।२।४१) इति कत्वम्। "आदेशप्रत्यययोः" (पा० ८।३।५९) इति सिपः षत्वम्। बहुलग्रहणात्सिपः परस्ताच्छबपि भवति। सिपा व्यवधानात्पश्यादेशो न भवति शपः पित्त्वादनुदात्तत्वम्। उत्तरस्य लसार्वधातुकानुदात्तत्वम्। धातुस्वर एव शिष्यते। हिशब्दयोगा"त्तिङ्ङतिङः" इति निघातो न भवति। "हि च" (पा० ८।१।३४) इति प्रतिषेधात्। संजग्मानः। गमेः संपूर्वा"च्छन्दसि लुङ्लङ्लिटः" (पा० ३।४।६) इति वर्तमाने लिट्। "समो गम्यृच्छिभ्या" (१।३।२९) मित्यात्मनेपदविधानाल्लिटः कानजादेशः। द्विर्भावः। हलादिशेषः। अभ्यासस्य चुत्वम्। "गमहने" (पा० ६।४।९८) त्युपधालोपः कानचश्चित्त्वादन्तोदात्तत्वम्। गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम्। अबिभ्युषा। "ञिभी भये"। पूर्ववल्लिट्। "शेषात्कर्तरि परस्मैपदम्" (पा० १।३।७८) इति परस्मैपदम्। "क्वसुश्च" (पा० ३।२।१०७) इति लिटः क्वसुरादेशः। तस्य कित्त्वाद्गुणाभावः। द्विर्भावः। अभ्यासस्य ह्रस्वजश्त्वे। क्रादिनियमात्प्राप्त "इड्वस्वेकाजाद्घसाम्" (पा० ७।२।६७) इति नियमान्निवर्तते। नञ्समासे तृतीयैकवचने भत्वा-"द्वसोः संप्रसारणम्" (पा० ६।४।१३१) इति वकारस्योकारः। "संप्रसारणाच्च" (पा० ६।१।१०८) इति पूर्वरूपत्वम्। "शासिवसिघसीनां च" (पा० ८।३।६०) इति षत्वम्। इयङादेशं बाधि-"त्वेरनेकाचोऽसंयोगपूर्वस्य (पा० ३।४।८२) इति यणादेशः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। पूर्वेण सह संहितायामोकार"स्यैङः पदान्तादति" (पा० ६।१।१०९) इति परपूर्वत्वे प्राप्ते "प्रकृत्यान्तःपादमव्यपरे" (पा० ६।१।११५) इति प्रकृतिभावः। मन्दू। "मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु"। "इदितो नुम् धातोः" (पा० ७।१।५८) इति नुमागमः। कुरित्यनुवृत्तौ "खरुशंकुपीयुनीलंगुलिगु" (उ० १।३६) इत्यत्राविभक्तिकनिर्देशाद्वन्तेर्हिगुरितिवद्धातन्तरादपि कुरित्युक्तं। प्रत्ययस्वरेणन्तोदात्त। द्विवचनमौ। "प्रथमयोः पूर्वसवर्णः" (पा०६।१।१०२) तृतीयैकवचने चेत् "सुपां सुलुगि"त्यादिना पूर्वसवर्णदीर्घत्वम्। समानवर्चसा। समानं

वर्चो ययोरिति वा यस्येति वा बहुव्रीहिः। द्विवचने "सुपांसुलुगि"त्यादिनाकारादेशः। समानपादस्य प्रातिपदिकान्तोदात्तत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण तदेव शिष्यते ॥७॥

स्क०—इन्द्रेण सह त्वं मरुद्गण ! संहि दृक्षसे। सञ्जग्मानः संगच्छमानः – तत्रतत्र वृत्र बधादौ कार्ये, अविभ्युषा भयवर्जितेन। तस्या एकान्तगयास्तु अर्धर्चोऽन्त्यो द्विदेवतः, या ऐन्द्रमारुत्युक्ता ऋक् एक वीलुचिदिति तस्या एकान्तरा या इन्द्रेण संहीत्येषा तस्या, अर्धर्चोऽन्त्यो द्विदेवतः ऐन्द्रमारुतः। मन्दू। मन्दतेर्मोदनार्थस्यैतद्रूपम्। नित्यप्रमुदितौ। समानवर्चसा तुल्यदीप्ती चेन्द्रमरुद्गणौ ॥७॥

वे० इन्द्रेणहि सन्दृश्यसे स सङ्गच्छमानोऽविभ्युषा मरुद्गणं युद्धार्थम्। इन्द्रमरुद्गणौ मदिष्णू भवथः संयुक्तौ समानवर्चसौ। यद्वा मन्दुना समान वर्चसेन्द्रेणेति ॥७॥

अष्टमीमृचमाह :–

अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति।

गणैरिन्द्रस्य काम्यैः ॥ ८ ॥

अनवद्यैः। अभिद्युऽभिः। मखः। सहस्वत्। अर्चति।

गणैः इन्द्रस्य। काम्यैः ॥ ८ ॥

मखः प्रवर्तमानोऽयं यज्ञोऽनवद्यैः–दोषरहितैरभिद्युभिः–द्युलोकमभिगतैः काम्यैः–फलप्रदत्वेन कामयितव्यैर्गणैः मरुत्समूहैः सहितमिन्द्रस्येन्द्रम् सहस्वद्बलोपेतं यथा भवति तथार्चति पूजयति। अयं यज्ञो मरुत इंद्रं चातिशयेन प्रीणयतीत्यर्थः। "यज्ञ" इत्यादिषु पंचदशसु "मखो विष्णुरि"ति पठितम्। चतुश्चत्वारिंशत्स्वर्चतिकर्म"स्वर्चति गायती"ति पठितम् ॥

न विद्यतेऽवद्यं येषां तेऽनवद्याः। "नञ्सुभ्यामि"त्युत्तरपदान्तोदात्तत्वम्। अभिगता द्यौर्यैस्तेऽभिद्यवः। तैरभिद्युभिः। अभिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण स एव शिष्यते। मखः। प्रातिपदिकस्वरः। सहो बलमस्मिन्नर्चने शर्मण्यस्तीति सहस्वत्। "तसौ मत्वर्थे" (पा० १।४।१९) इति भसंज्ञया पदसंज्ञायाः बाधितत्वात्सकारस्य रुत्वाभावः। "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" (पा० ८।२।९) इति वा "झयः" (पा० ८।२।१०) इति वा मतुपो मस्य वत्वम्। सहस्शब्दो "नब्विषयस्यानिसंतस्ये"

त्याद्युदात्तः। मतुपः पित्त्वात्स एव शिष्यते। काम्यैः। कमेर्णिङ्। "अत उपधायाः" (पा० ७।२।११६) इति वृद्धिः। "जनी जृष् क्नसु रंजोऽमंताश्च" (धा० पा० १९।६३।६७) इत्यमंतत्वेन प्राप्तस्य मित्त्वस्य "न कम्यमिचमामि"ति प्रतिषेधात् (धा० पा० १९।६९) "मितां ह्रस्वः" (पा० ६।४।९२) इत्युपधाह्रस्वत्वं न भवति। ण्यन्ता"दचो यत्" (पा० ३।१।९७) णिलोपः। "तित्स्वरितमि"ति प्राप्ते "यतोऽनावः" (पा० ६।१।२१३) इत्याद्युदात्तत्वम् ॥८॥

स्क०—सर्वाश्चात्र द्वितीयार्थे तृतीया। अनवद्यान्-अगर्ह्यान्-अभिगतदीप्तीन् अत्यन्तदीप्तान्। मखोयज्ञः। सहस्वत् बलवत्। सुप्नोत्यर्थः। अर्चति स्तौति। यत्-यज्ञ ऋत्विजः, स्तुवन्ति, तदिदं यज्ञ एव स्तौतीत्युच्यते। अथवा मखो यज्ञकारी संस्तौति। कान् गणान्-सप्त सप्तकान्। इन्द्रस्य काम्यैः काम्यान्। प्रियान्। अथवा अनवद्यादिगुणैर्मरुद्गणैर्युक्तो यज्ञः—सुप्नोत्यर्चन्तेऽत्र मरुतो देवा इन्द्रश्च। अतो यज्ञोऽत्यन्तं पूज्यत इत्यर्थः ॥८॥

वे०—अनवद्यैः। अवद्यरहितैरभिद्योतमानैः सहस्तात। सहस्वन्तमिन्द्रं अर्चतिगणैरिन्द्रस्य प्रियैः। गणशब्द एकवचनबहुवचने पर्यायेण भवतः ॥ ८ ॥

नवमीमृचमाह—

अतः॑ परिज्मन्ना ग॑हि दि॒वो वा॑ रोच॒नादधि॑।
स॒म॒स्मिन्नृ॑ञ्जते॒ गिरः॑ ॥ ९ ॥

अतः॑। परि॒ऽज्मन्। आ। ग॒हि॒। दि॒वः। वा॒। रो॒च॒नात्। अधि॑।
सम्। अ॒स्मिन्। ऋ॒ञ्ज॒ते॒। गिरः॑ ॥ ९ ॥

हे परिज्मन्—परितो व्यापिन्मरुद्गण। अतो=ऽस्मान्मरुद्गणस्थानादंतरिक्षादागहि=अस्मिन्कर्मण्यागच्छ। दिवो वा द्युलोकाद्वा समागच्छ। रोचनादधि दीप्यमानादादित्यमंडलाद्वा समागच्छ। अस्मदीयकर्मकाले यत्र यत्र तिष्ठसि ततः सर्वस्मादागच्छेत्यर्थः। किमर्थमागमनमिति तदुच्यते। अस्मिन्कर्मणि वर्त्तमान ऋत्विगिरः=स्तुतीः समृंजते सम्यक् प्रसाधयति। "ऋंजतिः प्रसाधनकर्मे"ति यास्कः। एताः स्तुतीः श्रोतुमागच्छेत्यर्थः। यद्यप्यृत्विजा मन्त्रस्य प्रयुज्यमानत्वादृञ्जतिधातोरुत्तमपुरुषेण भवितव्यं, तथापि परोक्षकृतत्वेन निर्देशात्प्रथमपुरुषप्रयोगः। परोक्षकृतलक्षणं च यास्क आह "तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च। तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यंते प्रथमपुरुषैश्चाख्यातस्येति" ॥

अतः। "पंचम्यास्तसिल्" (पा० ५।३।७) एतदोऽश्। शित्त्वात्सर्वादेशः। "लिती"ति प्रत्ययात्पूर्वस्योदात्तत्वम्। परिज्मन्। "अज गतिक्षेपणयोः"। "अन्येभ्योऽपि दृश्यन्ते" पा० ३।२।७५ इति मनिन्। अकारलोपश्छांदसः। आमन्त्रितनिघातः। गहि। गमे"र्बहुलं छंदसि" (पा २।४।७३) इति शपो लुक्। हेर्ङित्त्वा"दनुदात्तोपदेशे" (पा० ६।४।३७) त्यादिना मलोपः। "अतो हेः" (पा० ६।४।१०५) इति हिलोपो न भवति तस्मिन्कर्त्तव्ये "असिद्धवदत्रा भात्" (पा० ६।४।२२) इति मलोपस्यासिद्धत्वेनानकारान्तत्वात्। दिवः। "ऊडिदमि"-त्यादिना विभक्तेरुदात्तत्वं। वा। "चादयोऽनुदात्ताः" (फि० ४।१५) इत्यनुदात्तः। रोचनात्। रुच दीप्तौ। "अनुदात्तेतश्च हलादेः" (पा० ३।२।१४९) इति युच्। "युवोरनाकौ" पा०७।१।१ इत्यनादेशः किदित्यन्तोदात्तः। अधि। "अधिपरी अनर्थकौ" (पा० १।४।९३) इति कर्मप्रवचनीयत्वेन सह निपातसंज्ञायाः समावेशा"न्निपाता आद्युदात्ताः" इत्याद्युदात्तः। अस्मिन्। परिज्मन्नित्यादिष्टस्यैवान्वादेशा"दिदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ" (पा० २।४।३२) इत्यश् अनुदात्तः। शित्त्वात्सर्वादेशः। विभक्ति"रनुदात्तौ सुप्पितौ" (पा० ३।१।४) इत्यनुदात्तेति सर्वानुदात्तत्वम्। ऋंजते। "ऋजि भृजी वर्जने"। समित्युपसर्गयोगा-त्प्रसाधने वर्तते। निघातः। गिरः। प्रातिपदिकस्वरः ॥९॥

स्क०—अत इति मरुद्गणस्थानस्यान्तरिक्षस्यनिर्देशः। अतोऽन्तरिक्षात्। हे परिज्मन्! सर्वतोगामिन्! मरुद्गण! आगहि-आगच्छ। द्युलोकात् दीप्तात्। अथवा रोचनादादित्य मण्डला द्वेत्यर्थः। अयं मधुच्छन्दा नाम ऋषिर्ऋत्विग् ब्राह्मणाच्छंस्याख्ये अस्मिन् यज्ञे समृञ्जते सम्यक् प्रसाधयति-उपकल्पयति गिरः ॥ ६ ॥

वे०—अतः परिज्मन्। अतोऽन्तरिक्षात् परितोगन्तर्मरुद्गण! आगच्छ, आदित्यस्य रोचना-लोकात्। अधिपरी सप्तमीपंचम्योरर्थे स्फुटीकुरुतः। अस्मिन् मरुद्गणे सम्प्रसाधयति स्तुतीर्म-धुच्छन्दा ॥ ६ ॥

दशमीमृचमाह—

इतो वा सातिमीमहे दिवो वा पार्थिवादधि

इंद्रं महो वा रजसः ॥ १० ॥

इतः। वा। सातिं। ईमहे। दिवः। वा। पार्थिवात्। अधि।

इंद्र। महः। वा। रजसः ॥ १० ॥

इन्द्रं = देवं प्रति सातिं = धनदानमधीमहे = आधिक्येन याचामहे। कस्माल्लोकादिति तदुच्यते। इतो = ऽस्मादभिदृश्यमानात्पार्थिवा = त्पृथिवीलोकाद्वा। दिवो वा = द्युलोकाद्वा। महो = महतः प्रौढाद्रसो वा = पक्षादीनां रञ्जकादन्तरिक्षलोकाद्वा। अयमिन्द्रो यतःकुतश्चिदानीयास्मभ्यं धनं प्रयच्छत्वित्यर्थः। सप्तदशसु याच्ञाकर्म"स्वीमहे यामी"ति पठितम्॥

इतः। इदम्शब्दा"त्पंचम्यास्तसिल्"। इदम इश्" (पा० ५।३।३) इतीश्। शित्त्वात्सर्वादेशः। अ"त्रोडिदाम" (पा०६।१।१७१) त्यस्यावकाशः। आभ्याम्। एभिः "लिती" (पा० ६।१।१९३) त्यस्यावकाशः पचनं पाचकः। उभावपि नित्यौ। तत्र परत्वा"द्विप्रतिषेधे परं कार्यमि"ति (पा० १।४।२) "लिती"तीकारस्योदात्तत्वं। पश्चात्तसेः "प्राग्दिशो विभक्तिः" (पा० ५।३।१) इति विभक्तिसंज्ञकत्वा"दूडिद"मि (पा० ६।१।१७) त्यादिनाऽसर्वनामस्थानविभक्तेरुच्यमानमुदात्तत्वं भवति। "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" (पा० ४०) "त्यूडिदमि"त्यस्य पुनरप्रवृत्तिरेवेति चेत्। न। लक्ष्यानुरोधेन पुनः प्रसंगविज्ञानं चेति स्वीकारात्। नन्वेवं यतस्तत इत्यादावपि परेण लित्स्वरेण बाधितमपि "सावेकाच" परं इति तसिल उदात्तत्वं स्यादिति चेत्। न। यत्तच्छब्दयोः सावर्णत्वे "न गोश्वन्सावर्णेति" (पा० ६।१।१८२) निषेधात्। न च "पुनः प्रसंगविज्ञानं चेत्येतत्सार्वत्रिकं लक्ष्यानुरोधेन क्वचिदेव तदाश्रयणादिति। सातिं। "षणु दाने"। "धात्वादेः षः सः" (पा० ६।१।६४) भावे क्तिन्। "जनसनखनां सनझलोः" (पा० ६।४।४२) इति नकारस्यात्वं। "तितुत्तथसिसुसरकसेषु च" पा० ७।२।९ इति निषेधादिण् न भवति। नित्स्वरे प्राप्त उदात्त इत्यनुवृत्ता"वृतियूतिजूतिसातिहेतिकीर्तयश्चे"ति (पा० ३।३।२५) निपातनादन्तोदात्तत्वं। ईमहे। ईङ् गतौ। श्यनोऽपि बहुलं छंदसीति लुक्। अस्य धातोर्ङित्त्वा"त्तास्यनुदात्तेन्ङिददुपदेशात्" (पा० ६।१।१८६) इति लसार्वधातुकस्यानुदात्तत्वे धातुस्वर एव शिष्यते। न च"तिङ्ङतिङ" इति निघातः। चवायोगे प्रथमा" (पा० ८।१।५९) इति निषेधात्। उत्तरवाक्ययोरपि हि वाशब्दयोगादन्यथा वाक्यापरिपूर्तेस्तिङ्विभक्तेरवश्यमध्याहारात्तदपेक्षयैषा प्रथमा तिङ्विभक्तिरिति। दिवः। "ऊडिदमि"त्यादिना विभक्तेरुदात्तत्वं। पार्थिवात्। प्रथ प्रख्याने। प्रथत इति पृथिवी। "प्रथः षिवन्संप्रसारणं च" (उ० १।१४९) इति षिवनप्रत्ययः। षिद्गौरादिभ्यश्च" (पा० ४।१।४१) इति ङीष्। प्रत्ययस्वरेणोदात्तः। शेषनिघातेनानुदात्तादिः पृथिवीशब्दः। पृथिव्या विकार इत्यर्थे "ओरञि"त्यनुवृत्ता"वनुदात्तादेश्च" (पा० ४।३।१४०)

इत्यञ्। "यस्येति च" (पा० ६।४।१४८) इतीकारलोपः। "तद्धितेष्वचामादेः" (पा० ७।२।११७) इत्यादिवृद्धी रपरत्वं। "ञ्नित्यादिर्नित्यमि"त्याद्युदात्तः। अधि। निपातत्वादाद्युदात्तः। इन्द्रं। रनप्रत्ययांत आद्युदात्तः। महः। महत इत्यस्याकारतकारयोर्लोपश्छांदसः। "सावेकाच" इति विभक्तेरुदात्तत्वं। रजसः। "नब्विषयस्यानिसंतस्ये"त्याद्युदात्तत्वम्॥ १०॥ १२॥ २-३॥

॥ इति प्रथमस्य प्रथमे द्वादशो वर्गः॥

स्क० अतःपरं यथाप्राप्तमैन्द्रमेव। अत इत्येतस्य सन्निहितवचनस्यवा पार्थिवादित्यनेन व्यवहितेनापि सामानाधिकरण्यम्। पर्थिवाल्लोकात् सातिं दानमीमहे, याचामहे। द्युलोकाद्वा याचामहे, इन्द्रम्। केवलाभ्यामेताभ्यामेवनहि। किन्तर्हिमहोवारजसः। रजः शब्दोलोकवचनः। महतो लोकात्। अर्थात् यस्मात् कस्माद्वा स्थानादानीय, इन्द्रो ददान्वित्यर्थः॥१०॥

॥ इति प्रथमस्य प्रथमे द्वादशो वर्गः॥

वे०—अत उत्तरमिन्द्र एव देवता। कुत इन्द्र आगच्छति न वयं जानीमः। तमिन्द्रमस्या भूमेरागच्छन्तं देयं धनं याचामहे। अपि वा दीमात् पार्थिल्लोकात्। पृथिव्यन्तरिक्ष नाम। इन्द्रं महो वा रजसः स्वर्गादिति॥१०॥

॥ इति प्रथमस्य प्रथमे द्वादशो वर्गः॥

"इन्द्रमि"त्यादिकं दशर्चं यत्सूक्तं तत् "सुरूपकृत्नुमि"त्यादिषु चतुर्थम्। ऋषिच्छन्दोदेवताविनियोगश्च पूर्ववत्। विशेषविनियोगस्तूच्यते। महाव्रते निष्केवल्यशस्त्र "मिन्द्रमिद्गाथिन" इति सूक्तम्। तथा च पंचमारण्यके सूत्रितम् "शिरो गायत्रमिन्द्रमिद्गाथिनः" (ए.आ.५,२,१,) इति। तथा चतुर्विंशेऽहनि ब्राह्मणाच्छंसिनः शस्त्रे "इन्द्रमिद्गाथिन" इति षळहस्तोत्रियस्तृचः। "चतुर्विंशे होताजनिष्ट"इत्युपक्रम्य"आयाहि सुषुमा हि त इन्द्रमिद्गाथिनो बृहत्" (आ० श्रौ० ७।२)। इति सूत्रितत्वात्। अतिरात्रे प्रथमे पर्यायेऽच्छावाकशस्त्रेऽयमेव तृचोऽनुरूपः। सुत्रितं च "इन्द्राय मद्वने सुतमिन्द्रमिद्गाथिनो बृहत" (आ० श्रौ० ६।४) इति।

तत्र प्रथमामृचमाह—

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्कभिरर्किणः।

इन्द्रं वाणीरनूषत ॥ १ ॥

इन्द्रम्। इत्। गाथिनः। बृहत्। इन्द्रम्। अर्कभिः। अर्किणः।

इन्द्रम्। वाणीः। अनूषत ॥ १ ॥

गाथिनो गीयमानसामयुक्ता उद्गातार इन्द्रमिदिन्द्रमेव बृहत्। 'त्वामिद्धि हवामहे' (ऋ. सं. ६.४६,१) इत्यस्यामृच्युत्पन्नेन बृहन्नामकेन साम्नानूषत। स्तुतवन्तः। अर्किणोऽर्चनहेमन्त्रोपेता होतारोऽर्केभिर्ऋग्रूपैर्मन्त्रैरिन्द्रमेवानूषत। ये त्ववशिष्टा अध्वर्यवस्ते वाणीर्वाग्भिर्यजूरूपाभिरिन्द्रमेवानूषत। अर्कशब्दस्य मन्त्रपरत्वं यास्केनोक्तम्। (अर्को मन्त्रो भवति यदनेनार्चन्ति)। (नि० ५।४) इति। श्लोक इत्यादिषु सप्तपंचाशत्सु वाङ्नामसु वाशी वाणी (१.११.१२) ति पठितम् ॥ गाथिनः। 'उषिकुषिगार्तिभ्यस्थन्' (उ० सू०,१६१) इति गायतेस्थन्प्रत्ययः। नित्त्वादाद्युदात्तः। गाथा एषां सन्तीति गाथिनः। 'व्रीह्यादिभ्यश्च' (पा० ५।२।११६) इतीनिः। प्रत्ययस्वरेणेकार उदात्तः। स च सति शिष्टः। बृहत्। बृहता। तृतीयैकवचनस्य सुपांसुलुगितिलुक्। 'पृषद्बृहन्महज्जगच्छतृवत्'(उ० २।२४१) इत्यन्तोदात्तोनिपातितः। अर्कभिः। अर्च पूजायाम्। अर्च्यन्त एभिरित्यर्कामन्त्रा। 'पुंसि संज्ञायां घः प्रायेण' (पा० ३।३।११८) इति घः। 'चजोः कु घिण्यतोः' (पा ७।३।५२) इति कुत्वम्। प्रत्ययस्वरेणान्तोदात्तः। 'बहुलं छन्दसि' (पा० ७।१।१०) इति भिस ऐसादेशो न भवति। अर्का स्तुतिसाधनभूता मन्त्रा एषां

सन्तीत्यर्किणः। वाणीः। 'वृषादीनां च' (पा० ६।१।२०३) इत्याद्युदात्तः। 'दीर्घाज्जसि च' (पा० ६।१।१०५) इति पूर्वसवर्णदीर्घनिषेधस्य 'वा छन्दसि' (पा० ६।१।१०६) इति विकल्पितत्वा-द्दीर्घत्वम्। तृतीयार्थे प्रथमा। अनूषत। णु स्तुतौ। 'णो नः' (पा० ६।१।६५) इति नत्वम्। लुङि व्यत्ययेनात्मनेपदम्। झस्यादादेशः (पा० ७।१।५) सिच इडभाव उकारस्य दीर्घत्वं च छान्दसं धातोः कुटादित्वात्। (पा० १।२।१) सिचो ङित्त्वेन (पा० १।१।५) गुणाभावः॥

स्क०—इन्द्रमेव। गीयन्ते इति गाथाः समानि। उद्गातारः। महतासाम्ना इन्द्रमेव अर्केभिः मन्त्रैः मन्त्रवन्तो होतारः। इन्द्रमेव वाणीः। यजुर्लक्षणैः अध्वर्यवः अनूषत अस्तुवन्॥ १॥

वे०—इन्द्रमेवोद्गातारो बृहता साम्ना स्तुवन्ति। इन्द्रं शस्त्रैर्होतार इन्द्रमेव सर्वा गिरः स्तुवन्ति॥ १॥

द्वितीयामृचमाह—

इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा।

इन्द्रो वज्री हिरण्ययः॥ २॥

इन्द्रः। इत्। हर्योः। सचा। सम्ऽमिश्लः। आ। वचःऽयुजा।

इन्द्रः। वज्री। हिरण्ययः॥ २॥

इन्द्र इदिन्द्र एव हर्योर्हरिनामकयोरश्वयोः सचा सह युगपदा संमिश्लः सर्वतः सम्य-ग्मिश्रयिता। कीदृशोर्हर्योः। वचोयुजा। इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः। अयमिन्द्रो वज्री वज्रोयुक्तः। हिरण्ययः। हिरण्मयः स्वर्वा-भरणभूषित इत्यर्थः॥ हर्योः। हरत इति हरी। इन्। नित्त्वादाद्युदात्तः। सचा। सहेत्युक्तम्। संमिश्लः। मिश्रणं मिश्रः। मिश्रयतेर्घञ् (पा० ३।३।१८) सम्यक् मिश्रो यस्यासौ संमिश्रः। लत्वं छान्दसं। सम्यक् मिश्रयितेत्यर्थः। पूर्वहुव्रीहौ पूर्वपदप्रकृति-स्वरत्वम्। वचोयुजा। वचसा। युज्येते इति वचोयुजौ। तयोः। षष्ठीद्विवचनस्य सुपां सुलुगित्याकारादेशः। युजशब्दो धातुस्वरेणान्तोदात्तः। कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। वज्री। वज्रमस्यास्ति। अत इनिठनौ। प्रत्ययस्वरः। हिरण्ययः। 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि' (पा० ६।४।१७५) इति हिरण्यमयशब्दस्य

मकारलोपो निपात्यते। अकारः प्रत्ययस्वरणोदात्त। पूर्वेणानुदात्तेन सहैकादेश-उदात्तेनोदात्त इत्युदात्तः ॥

स्क०—इन्द्र एव हर्योरश्वयोः सह समिश्लः आभिमुख्येन सम्मिश्लयिता। केन। रथेन रथे योग पद्येन नियोक्तेत्यर्थः। युज्येथामिति वचन मात्रेण स्वयमेव यौ युज्येते। विनीत योरित्यर्थः। इन्द्र एव वज्री वज्रवान्। हिरण्मय सदृशः दीप्तवर्णो इत्यर्थः ॥ २ ॥

वे०—एकाकी चरन्निन्द्रएव स्वाश्रयोऽसहायभूतः स एव संयोजयत्युक्तिमात्रेण युञ्जाना-विन्द्रो वज्री हिरण्मय सर्व शरीरः ॥ २ ॥

तृतीयामृचमाह –

इन्द्रो॑ दी॒र्घाय॒ चक्ष॑स॒ आ सूर्यं॑ रोहयद्दि॒वि ।

वि गोभि॒रद्रि॒मैरयत् ॥ ३ ॥

इन्द्रः॑ । दी॒र्घाय॑ । चक्ष॑से । आ । सूर्य॑म् । रो॒ह॒य॒त् । दि॒वि । वि ।

गोभिः॑ । अद्रि॑म् । ऐ॒र॒य॒त् ॥ ३॥

अयमिन्द्रो दीर्घाय प्रौढाय निरन्तराय चक्षसे दर्शनाय दिवि द्युलोके सूर्यमारोहयत्। पुरा वृत्रासुरेण जगति यदापातितं तमस्तन्निवारणेन प्राणिनां दृष्टिसिद्ध्यर्थमादित्यं द्युलोके स्थापितवानित्यर्थः। स च सूर्यो गोभिः स्वकीयरश्मिभिरद्रिं पर्वतप्रमुखं सर्वं जगद्व्यैरयत्। विशेषेण दर्शनार्थं प्रेरितवान्। प्रकाशितवानित्यर्थः। अथवा। इन्द्र एव गोभिर्जलैर्निमित्तभूतैरद्रिं मेघं व्यैरयत्। विशेषेण प्रेरितवान्। पञ्चदशसंख्याकेषु रश्मिनामसु 'खेदयः किरणा गाव' (नि० १,५,६) इति पठितम्। त्रिंशत्संख्याकेषु मेघनामस्व-द्रिर्ग्रावे (नि० १,१०,१) ति पठितम्॥ दीर्घाय। प्रातिपदिकस्वरेणान्तोदात्तः। चक्षसे। 'चक्षेः सर्वधातुभ्योऽसुन्नि' (उ० सू. ४.६२८) त्यसुन। बहुलग्रहणात्ख्याञादेशः। भावः। नित्त्वादाद्यु-दात्तः। सूर्यम्। सुवति प्रेरयतीति सूर्यः। 'षू प्रेरणे'। धात्वादेः षः सः। 'राजसूयसूर्येत्यादिना' (पा०।३।१।११४) क्यप्प्रत्ययः। तस्य रुडागमश्च निपात्यते। क्यपः कित्त्वाद्गुणाभावः। पित्त्वादनुदात्तत्वं धातुस्वर एव शिष्यते। रोहयत्। रुहेर्ण्यन्ताल्लङि 'बहुलं छन्दस्यमाङ्योगे-ऽपि' (पा० ।६।४।७५) इत्यडभावो निघातश्च। दिवि। ऊडिदमित्यादिना विभक्तेरुदात्तत्वम्। अद्रिम्। 'अदिशदिभूशुभिभ्यः क्रिन' (उ० ४।५०५) इति क्रिन्प्रत्ययः। अदन्ति

पशवस्तृणादिकमत्रेत्यद्रिः। नित्त्वादाद्युदात्तत्वम्। ऐरयत्। ईर गतौ। ण्यन्ताल्लङ्। निघातः॥

स्क०—वृत्रो महत् तमस्तताान। तेन तमसावृतं सर्वमधर्मप्रज्ञानं बभूव। ततो इन्द्रो वृत्रंहत्वा तमसोऽपनोदनार्थंसूर्यं दिव्यारोहयाञ्चकारेति। तदेतदुच्यते इन्द्रः आप्रलय भाविने चक्षसे दर्शनाय सूर्यमारोपितवान् द्युलोके। किञ्चवियोगिभिरद्रिमैरयत्। वज्रैरयत् प्राणेभ्यो विगमितवान् हन्ति वेत्यर्थः। अथवा उदकार्थंमेघं हन्तीत्यर्थः॥ ३॥

वें० इन्द्रो मनुष्याणां चिराय दर्शनाय दिवि सूर्यमारोहयत् तेजोभिश्च विविधं वर्षार्थं मेघं प्रेरयति॥ ३॥

चतुर्थीमृचमाह॥—

इन्द्र॒ वाजे॑षु नोऽव स॒हस्र॑प्रधनेषु च।

उ॒ग्र उ॒ग्राभि॑रू॒तिभिः॑॥ ४॥

इन्द्र॑। वाजे॑षु। नः॒। अ॒व॒। स॒हस्र॑ऽप्रधनेषु। च॒। उ॒ग्रः।

उ॒ग्राभिः॑। ऊ॒तिऽभिः॑॥ ४॥

हे इन्द्र। उग्रः शत्रुभिरप्रधृष्यस्त्वमुग्राभिरप्रधृष्याभिरूतिभिरस्मद्विषयरक्ष्याभिर्वाजेषु युद्धेषु नोऽस्मानव। रक्ष॥ तथा सहस्रप्रधनेषु च। सहस्रसंख्याकगजाश्वादिलाभ-युक्तेषु महायुद्धेष्वपि रक्ष॥ वाजेषु। 'वृषादीनां च' (पा० ६।१।२०३) इत्याद्युदात्तत्वम्। नोऽव। नसः सकारस्य रुत्वोत्वगुणेषु प्रकृत्यान्तःपादमिति प्रकृतिभावो न भवति। 'अव्यपर इति निषेधात्' (पा० ६।१।११५) अव रक्षणे। तिङ्ङतिङ इति निघातः। यद्यपि सहस्रप्रधनेष्ववेत्यध्याहृतां क्रियामपेक्ष्य प्रथमायाः श्रूयमाणाया अवेति क्रियाया'श्चवायोगे प्रथमा' (पा० ८।१।५९) इति निघातनिषेधः प्राप्तः। तथापि वाजेष्वित्यत्र चकारस्य लुप्त-त्वा'च्चादिलोपे विभाषा' (पा० ८।१।६३) इति निषेधस्य विकल्पितत्वादत्र निघातः प्रवर्तते। सहस्रशब्दः 'कर्दमादीनां च' (फि० ५१९) इति मध्योदात्तः। सहस्रप्रधनेषु वाजेषु। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। उग्रः। उच समवाये। चस्य गः। ऋज्रेन्द्रेत रन्। व्यत्ययेनान्तो-दात्तः। ऊतिभिः। ऊतियूतीत्यादिना क्तिन्नुदात्तः॥

स्क०—हे इन्द्र ! युद्धेषु अस्मान् अव रक्ष । सहस्र प्रधनेषु बहुत्यन्तधनावेत्यर्थः । उग्रः । प्रत्यक्ष कृतोऽयंमन्त्रः यस्त्वमुग्रः अन्येनाप्रसह्यः । सः अवैति । उग्राभिः अन्येनाप्रसह्याभिः । उतिभिः पालनैः ॥ ४ ॥

वे०—इन्द्र ! क्षुद्रेषु अस्मान् रक्ष च । महत्सु उग्र उद्गीर्ण उद्गूर्णैः पालनैः । अस्योत्तरा भूयसे निर्वचनाय ॥ ४ ॥

पञ्चमीमृचमाह ॥ —

इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे ।
युजं वृत्रेषु वज्रिणम् ॥ ५ ॥

इन्द्रम् । वयम् । महाऽधने । इन्द्रम् । अर्भे । हवामहे ।
युजम् । वृत्रेषु । वज्रिणम् ॥ ५ ॥

वयमनुष्ठातारो महाधने प्रभूतधननिमित्तमिन्द्रं हवामहे । आह्वयामः । अर्भेऽर्भके स्वल्पेऽपि धने निमित्तभूते सतीन्द्रं हवामहे । कीदृशमिन्द्रम् । युजम् । सहकारिणं समाहितं वा । वृत्रेषु शत्रुषु धनलाभविरोधिषु प्राप्तेषु तन्निवारणाय वज्रिणं वज्रोपेतम् ॥ महाधन-शब्दो यद्यपि संग्रामनामसु पठितस्तथापि महाधनवचनमत्र संग्राम इति बहुव्रीहित्वे सत्यन्तो-दात्तत्वासिद्धेर्नात्र तद्गृहीतम् । महाधने महच्च धनं चेति समासस्येत्यन्तोदात्तः । अर्भे । 'अर्तिगृभ्यां भन्' (उ० ३।४३२) निस्त्वादाद्युदात्तः । हवामहे । ह्वेञ् स्पर्द्धायां शब्दे च । ञित्त्वा-त्कर्त्रभिप्राये (पा० १।३।७२) आत्मनेपदम् । लटः स्थाने महिङ् । 'टित आत्मनेपदानाम्' (पा० ३।४।७९) इति टेरेत्वम् । 'कर्तरि शप्' (पा० ३।१।६८) 'ह्वः संप्रसारणम्' (पा० ६।१।३२) इत्यनु-वृत्तौ 'बहुलं छन्दसि' (पा० ।६।१।३४) इति संप्रसारणम् । वकारस्योकारः परपूर्वत्वम् । गुणावा-देशौ । 'अतो दीर्घो यञि' (पा० ७।३।१०१) इति दीर्घत्वम् । 'तिङ्ङतिङः' इति निघातः । युजम् । युज समाधावित्यस्य क्विप् । 'युजेरसमासे' (पा० ७।१।७१) इति नुम् न भवति । स हि युजेरिति निर्देशादिकाररहितस्य न भवति । अनित्यमागमशासनमिति वा युजिर्योग इत्यस्यापि नुम् न भवति । वृतु वर्तने । प्रतिकूलतया वर्तन्त इति वृत्राणि शत्रुकुलानि । 'स्फायितंचे (उ० २।१३) त्यादिना रक्प्रत्ययः किंत्त्वाद्गुणाभावः । प्रत्ययस्वरः । वज्रिणम् । 'अत इनिठनाविती्नः' (पा.सू. ५,२,११५) प्रत्ययस्वरः ॥

॥ इति प्रथमस्य प्रथमे त्रयोदशो वर्गः ॥

स्क०—महाधने। महति सङ्ग्रामे। इन्द्रमेव अर्भे। अल्पे सङ्ग्राम एव। हवामहे अह्वयामः युंजे सहायकम्। वृत्रेषु सङ्ग्रामव्यतिरिक्तेष्वपि च शत्रुषु इन्द्रमेव समाह्वयामः वज्रिणम् ॥ ५ ॥

॥ इति प्रथमस्य प्रथमे त्रयोदशो वर्गः ॥

वे० — इन्द्रं वयं महति संग्रामे हवामहे, इन्द्रमल्पे च सहायमुपद्रवेषु आयुधवन्तम् ॥ ५ ॥

॥ इति प्रथमस्य प्रथमे त्रयोदश वर्गः ॥

इन्द्रमिद्गाथिन इति सूक्ते षष्ठीमृचमाह ॥—

स नो॑ वृषन्न॒मुं च॒रुं सत्रा॑दाव॒न्नपा॑ वृधि ।

अ॒स्मभ्य॒मप्र॑तिष्कुतः ॥ ६ ॥

सः । नः । वृ॒ष॒न् । अ॒मुम् । च॒रुम् । सत्रा॑ऽदावन् । अप॑ ।

वृ॒धि । अ॒स्मभ्य॑म् । अप्र॑तिऽस्कुतः ॥ ६ ॥

हे सत्रादावन्! अस्मदभीष्टानां सर्वेषां फलानां सह प्रदातः अतो व्रीह्यादिनिष्पत्यर्थं हे वृषन् वृष्टिप्रदेन्द्र नोऽस्मदर्थममुं दृश्यमानम् चरुं मेघमपावृधि। उद्घाटय। तथैवास्म-भ्यमस्मदर्थमप्रतिष्कुतः प्रतिशब्दरहितः। यद्यदस्माभिर्याच्यते तत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयति। अतोऽस्मद्विषये कदाचिदप्यप्रतिस्खलितः। एतदेवाभिप्रेत्य यास्क आह। अप्रतिष्कुतोऽप्रतिस्खलितो वेति॥ वृषन्। आमन्त्रितनिघातः। अमुम्। प्रातिपदिक-स्वरेणान्तोदात्तः। चरुम्। चरतीति चरुः। 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' (उ० १।७) इत्युप्रत्ययः। प्रत्ययस्वरेणान्तोदात्तः। सत्रादावन्। सत्राशब्दः सहार्थे। अभिमतफलजातं सकलं सह ददातीति सत्रादावा। 'अतो मनिन्क्वनिब्वनिपश्च' (पा० ३।२।७४) इति वनिप्। 'आमन्त्रितस्य च' (पा.सू. ६.१.१९८) त्युदात्तत्वम्। पादादित्वान्न निघातः। अप। निपातस्य चेति दीर्घः। निपात आद्युदात्तः। वृधि। वृञ् वरणे। लोटः सिप्। तस्य 'सेर्ह्यपिच्च' (पा० ३।४।८७) इति हिः। 'स्वादिभ्यः श्नुः' (पा० ३।१।७३) तस्य 'बहुलं छन्दसी (पा.२,४।७३) ति लुक्। 'श्रुशृणुपृकृवृभ्यश्छन्दसि' (पा० ६।४।१०२) इति हेर्धिरादेशः। तस्य ङित्वात्पूर्वस्य गुणाभावः। निघातः। अस्मभ्यम्। अस्मच्छब्दाद्भ्यसो

भ्यम् (पा० ७।१।३०) इति भ्यमादेशः। 'शेषे लोपः' (पा० ७।२।९०) इति दकारलोपः। 'बहुवचने झल्येत्' (पा० ७।३।१०३) इत्येत्वं न भवति। 'अंगवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' (म० भा० ७।१।३०) त्युक्तम् प्रातिपदिकस्वरेण स्मेत्यकार उदात्तः। भ्यसोऽभ्यमित्यभ्यमादेशपक्षे शेषे लोप इति मपर्यन्तशेषस्याद्शब्दस्य लोपः। तदोदात्तनिवृत्तिस्वरेणाभ्यमादेरकारस्योदात्तत्वम् (पा० ६।१।१६१) अप्रतिष्कुतः। केनचिदप्रतिशब्दितः। कुङ् शब्दे। निष्ठेति कर्मणि क्तप्रत्ययः। प्रतेः प्राक्प्रयोगः। पारस्करादेराकृतिगणत्वात्सुडागमः (पा० ६।१।१५७) सुषामादेराकृतिगणत्वात्षत्वम् (पा० ८।३।९८) नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

स्क०—योहि अस्मत्सर्वार्थं वर्षति। तत एवैवमाम्नायते। अमुंचरूं मेघम्। सत्रादावन् सत्य सततयोद्दातः। अपावृधि उद्घाटय। अस्मभ्यमस्मदर्थम्। अप्रतिष्कुतः अन्येनाप्रतित्यभियुक्त पूर्वइत्यर्थः। यस्त्वमप्रतिष्कुतः सो उपावृधि ॥ ६ ॥

वे०—सनो वर्षितारममुं मेघं महतो दातस्तेजोभिरपावृधि शत्रुभिऽप्रति शब्दितोऽप्रतिकृतोवा ॥ ६ ॥

सप्तमीमृचमाह—

तुंजेतुंजे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः।
न विंधे अस्य सुष्टुतिम् ॥ ७ ॥

तुंजेऽतुंजे। ये। उत्ऽतरे। स्तोमाः इन्द्रस्य। वज्रिणः।
न। विंधे। अस्य। सुऽस्तुतिम् ॥ ७ ॥

तुंजे तुंजे तस्मिन्तस्मिन्फलदातरि देवान्तरे ये स्तोमाः स्तोत्रविशेषा उत्तर उत्कृष्टाः सन्ति तैः स्तोमैः सर्वैरपि वज्रिणो वज्रयुक्तस्येन्द्रस्य सुष्टुतिं योग्यां शोभनस्तुतिं न विन्धे न विन्दामि। इन्द्रस्यात्यन्तगुणबाहुल्ये न देवान्तरेषूत्तमत्वेन प्रसिद्धान्यपि स्तोत्राणि न पर्याप्तानीत्यर्थः ॥ एतामृचं यास्क एवं व्याचष्टे तुंजस्तुंजतेर्दानकर्मणः। दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं स्तुतेः (नि० ६।१७।१८) इति ॥ तुंजेतुंजे। तुंजतिर्दानकर्मेत्युक्तम्। ततः कर्तरि पचाद्यच् (पा० ३।१।१३४) 'चित' (पा. ६१,१६३) इत्यन्तोदात्तत्वम्। 'नित्यवीप्सयोः'। (पा० ८।१।४) इति द्विर्भावः। 'तस्य परमाम्रेडितम्' (पा० ८।१।२) इति द्वितीयस्याम्रेडितसंज्ञा। 'अनुदात्त च' (पा० ८।१।३) इत्यनुदात्तत्वम्।

दातरि दातरीत्यर्थः। निरुक्ते तु 'दाने दाने' इत्यर्थतो व्याख्यातम्। उत्तरे। तॄ प्लवनतरणयोः। भावे 'ऋदोरप्' (पा० ३।३।५७) उच्छब्द उत्कृष्टवचनः। उत्कृष्टस्तरो यस्येति बहुव्रीहिः। उच्छब्दो 'निपाता आद्युदात्ताः' (फि. सू. ८०) इत्याद्युदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। स्तोमाः। 'अर्तिस्तुस्वित्यादिना' (उ० १।१३८) स्तोमशब्दो मनन्तो नित्त्वादाद्युदात्तः। विन्धे। विद्लृ लाभे। लट्। स्वरितेत्त्वादात्मनेपदम्। 'उत्तमैकवचनमिट्' (पा० ३।४।७८) 'तुदादिभ्यः शः'। (पा० ३।१।७७) 'शे मुचादीनामि''(पा० ७।१।५९) ति नुम् दकारस्य व्यत्ययेन धकारः। अस्य। प्रकृतस्येन्द्रस्य परामर्शादन्वादेश 'इदमोऽश्' (पा० २।४।३२) शित्त्वात्सर्वादेशोऽनुदात्तः। सुष्टुतिम्। ष्टुञ् स्तुतौ। 'धात्वादेः षः सः' (पा० ६।१।६४) इति सत्वम्। 'स्त्रियां क्तिन्' (पा० ३।३।९४) इति भावे क्तिन। स्वित्युदात्तेनोपसर्गेण प्रादिसमासः। 'उपसर्गात्सुनोती' (पा० ८।३।६५) त्यादिना षत्वम् अत्राव्ययपूर्वपदप्रकृतिस्वरत्वेन सोः प्राप्तमुदात्तत्वं बाधित्वा 'गतिकारकोपपदात्कृत्' (पा०६।२।१३९) इत्युत्तरपदप्रकृतिस्वरेण धातोरुदात्तत्वे प्राप्ते तदपवादत्वेन 'तादौ च निति कृत्यतौ' (पा० ६।२।५०) इत्यन्तरस्य गतिसंज्ञस्य सोरेवोदात्तत्वेन भवितव्यम्। तत्तु 'मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः' (पा० ६।२।१५१) इत्युत्तरपदान्तोदात्तत्वेन बाध्यते। तथा च 'सुहवां सुष्टुतौ हुवे' (ऋ० वे० २।७।१५) 'वृषणे चोदस्व सुष्टुतिम्'' (ऋ० वे० ६।५।२४) 'यास्ते राके सुमतयः (ऋ० वे० २।९।२५) इत्यादावन्तोदात्तत्वमित्याहुः। यथा तु मन्क्तिन्नित्यादौ वृत्तावुक्तं तथैव तन्न घटत इति लक्ष्यते। तत्र हि कारकाद्दत्तश्रुतयोरेवाशिषि (पा० ६।२।१४८) इत्यतः कारकादित्यनुवृत्तेः पाणिनिकृतिरित्यादावेव मन्क्तिन्नित्यादिसूत्रमित्युक्तम्। कारकादित्येव प्रकृतिः प्रहृतिरिति प्रत्युदाहृतम्। स्यादेतत्। स्तुयतेऽनयेति स्तुतिरिति क्तिना करणभूतमभिधीयते। सुशब्देन च करणमेव विशेष्यते न धात्वर्थः। तथा च सुष्टुतिरित्यत्र सुशब्दः कारकपर एव भविष्यति। प्रकृतिः प्रहृतिरित्यादौ तु प्रशब्दो धात्वर्थे विशेषणमेवेति तत्प्रत्युदाहरणोपपत्तिरिति। न। एवं सति सुशब्दस्य क्रियायोगाभावा 'दुपसर्गाः क्रियायोगे (पा० १।४।५९) इत्युक्तो'पसर्गसंज्ञा न स्यात्। तथा 'चोपसर्गात्सुनोतिसुवतीत्यादिना' (पा० ८।३।६५) षत्वं न स्यात्। ननु क्तिना करणमभिधीयते। क्रियासाधनं च करणम्। तथा च करणविशेषणस्यापि सुशब्दस्य करणन्तर्गतक्रियायोगादुपसर्गता भविष्यतीति। न। तथा सति 'यत्क्रियायुक्तास्तं प्रत्युपसर्गसंज्ञका' (पा० १।४।६०।३) इति

करोत्यर्थमेव प्रति सोरुपसर्गता न तु स्तुधात्वर्थं प्रतीत्यस्य षत्वं न स्यादेव। ननु स्तुधात्वर्थद्वारैव तत्करणस्य सुशब्दो विशेषणं भविष्यति। या हि शोभना स्तुतिस्तत्करणमपि शोभनमेवेति। एवं च स्तुधात्वर्थसंबन्धात्तं प्रत्युपसर्गत्वेन षत्वमपि भविष्यतीति वृत्यविरोधेनैव मन्क्तिनादिसूत्रस्य सुष्टुतिशब्दो विषयो भविष्यति। प्रकृतिः प्रहृतिरित्यत्र भावे क्तिन्निति प्रत्युदाहृते इति। न। तत्र प्रशब्ददस्य करणपरत्वम्। करणे क्तिनुदाहरणेऽपि धात्वर्थमात्रविशेषणतैव विवक्षिता न तद्द्वारा प्रत्ययार्थविशेषणतापीति तत्प्रत्युदाहरणोपपत्तिरिति। सुष्टुतिरित्यत्र पुनः क्तिनभिधेयकरणपर्यन्तं सुशब्दस्य व्यापार इत्युदाहरणतैव न प्रत्युदाहरणतेति। न। किमत्र सुशब्द श्रुत्यैव प्रकृतिप्रत्ययार्थोभयविशेषणपरः। उत श्रुत्यैकं विशिनष्टि। अर्थादितरदिति। यदाप्युभयपरत्वं तदापि यौगपद्येन उत क्रमेणेति। आद्ये प्रति विशेष्यै विशेषणपदावृत्तिरिति प्रसंगः। द्वितीये विरम्य व्यापारापातः। न च शब्दबुद्धिकर्मणां विरम्य व्यापारः कस्यचिदृष्ट इष्टो वा। अतो न श्रुत्योभयपरत्वम्। अथैकत्र श्रुत्या तात्पर्यम्। अपरत्र त्वर्थादिति। तत्र धात्वर्थसंबन्धस्यार्थिकत्वे षत्वासिद्धिः। प्रत्ययार्थसंबन्धस्यार्थिकत्वे मन्क्तिन्नित्यादिस्वरासिद्धिः। आर्थिकेनापि कारकसंबन्धेनोदाहरणत्वाभिधाने प्रकृतिः प्रहृतिरित्याद्युदाहरणं न स्यात्। श्रुत्या धात्वर्थमात्रसंबन्धस्यापि प्रशब्दस्यार्थात्तत्करणसंबन्धः केन वारयितुं शक्यत इत्येषा दिक्। अत इह प्रत्ययार्थमात्रसंबन्धपरत्वांगीकारेण स्वरः सिध्यतु षत्वं तु छान्दसमस्तु। शोभना स्तुतिर्यस्यामिति बहुव्रीहिर्वा भवतु। एवं च नञ्सुभ्यां। (पा० ६, २, १७२) इत्यन्तोदात्तं भविष्यति। अथवा सुष्ठु स्तुवन्तीति सुष्टुतय इति करणभूता ऋचः स्तुतिशब्देनोच्यन्ते। 'क्तिच्क्तौ च संज्ञायाम्। (पा० ३, ३, १७४) इति क्तिच्प्रत्यये सति चित्त्वादन्तोदात्तता भविष्यति। न च करणीभूतानामृचां कर्तृप्रत्ययेन क्तिचा कथमभिधानमिति वाच्यम्। काष्ठानि पचन्तीतिवत्तासामपि स्वव्यापारविवक्षया करणत्वोपपत्तेरिति॥

स्क०—तुञ्ज इति नव यज्ञनाम। तुञ्जे तुञ्जे दाने दाने। कस्य। सामर्थ्याद् वृष्टेः धनानां वा। य उत्तरे पूर्वेभ्यः प्रकृष्टतमा मदीया स्तोमा इन्द्रस्य वज्रिणः। तैरपिन विन्धे। अह मस्येन्द्रस्य सुष्टुतिं सुस्तुतिमशेषगुण प्रकाशन रूपाम्। अथवा न विन्धे न स्पृशामि। येऽपि दान परितुष्टस्य मे महान्तस्तोमास्तेपीन्द्रस्य गुणैकदेश वर्तिनः समस्त गुण प्रकाशनमप्राप्ताः इतिभावः॥ ७॥

वे०—तुञ्जे तुञ्जे दाने दाने। उत्तरोत्तरमृषयः एवं स्तुवन्ति। तेषु स्तोमेषु नास्याहंदान गुणां सुष्टुतिं विन्दामि॥ ७॥

अष्टमीमृचमाह—

वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा ।

ईशानो अप्रतिष्कुतः ॥ ८ ॥

वृषा । यूथाऽइव । वंसगः । कृष्टीः । इयर्ति । ओजसा ।

ईशानः । अप्रतिऽस्कुतः ॥ ८ ॥

वृषा कामानां वर्षितेन्द्र ओजसा स्वकीयबलेनानुग्रहीतुं कृष्टीर्मनुष्यानियर्ति । प्राप्नोति । कीदृश इन्द्रः । ईशानः । समर्थः ! अप्रतिष्कुतः । प्रतिशब्दरहितः । याच्यमानं न परिहरतीत्यर्थः । इन्द्रस्य दृष्टान्तः । वंसगो वननीयगतिर्वृषभो यूथेव गोयूथानि यथा प्राप्नोति तद्वत् ॥ वृषा । 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' (उ० १, १५४) इति वर्षतेः कनिन्प्रत्ययः । कित्त्वाद्गुणाभावः नित्त्वादाद्युदात्तः । यूथाऽइव । युवन्ति मिश्रीभवन्तीति यूथानि । यु मिश्रणामिश्रणयोः । 'तिथपृष्ठगूथयूथप्रोथाः' (उ० २, १६९) इति थप्रत्ययान्तो निपातितः । निपातनाद्दीर्घत्वं । प्रत्ययस्वरेणाकार उदात्तः । शेश्छन्दसि बहुलमि" (पा० ६,१,७०) ति लुक् । 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यमि' (पा० २, १, ४, २) ति समासेऽपि स एव स्वरः । वंसगः । पृषोदरादित्वादभिमतरूपस्वरसिद्धिः (पा० ६, ३, १०९) कर्षन्तीति कृष्टयः । 'क्तिच्क्तौ च संज्ञायामि'ति क्तिच् । चित्त्वादन्तोदात्तः । इयर्ति । ऋ सृ गतौ । तिप् । शपः श्लुः । 'श्लौ' (पा० ६, १, १०) विति द्विर्भावः । अभ्यासस्योरदत्वहलादिशेषौ (पा० ७, ४, ६६, ६०) 'अर्तिपिपर्त्योश्च' । (पा० ७, ४, ७७) इत्यकारस्येकारः । 'अभ्यासस्यासवर्णे' । (पा० ६, ४, ७८) इति यणादेशः । अङ्गस्य गुणो रपरत्वम् । ओजसा । 'उब्जे बलोपश्च । (उ० ४, ६३१) इत्यसुन् । तत्संनियोगेन बकारलोपः । लघूपधगुणः । नित्त्वादाद्युदात्तः । ईशानः । ईश ऐश्वर्ये । लटः शानच् । 'अदिप्रभृतिभ्यः शपः' (पा० २, ४, ७२) इति शपो लुक् । चिदित्यन्तोदात्तं बाधित्वानुदात्तत्वात्सार्वधातुकानुदात्तत्वेन धातुस्वर एव शिष्यते । अप्रतिष्कुतः । अप्रतिशब्दितः । कु शब्दे । कर्मणि क्तः । पारस्करादेराकृतिगणत्वात्सुडागमः । सुषामादित्वात्षत्वम् । नञ्समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

स्क०—वृषा वर्षितेन्द्रः यूथेव वंसगः वृषभः। वननीय गमनत्वात्। कृष्टीः यष्टृन् शत्रून् वा मनुष्यान्प्रति इयर्ति। गच्छति। ओजसा स्वबलेन ईशानः सर्वस्येश्वरः अप्रतिष्कुतः अप्रत्यागतोयुद्धे नियुज्ञानः। अन्येनाप्रत्यभियुक्त पूर्वं इत्यर्थः॥ ८॥

वे०—वर्षिता गोयूथानीव वननीय गमन वृषभ इन्द्रो वीरो युयुत्सून् मनुष्यान् बलेनाभि गच्छति। सर्वस्येशानोऽप्रतिकृतः॥ ८॥

नवमीमृचमाह—

य एकश्चर्षणीनां वसूनामिरज्यति।

इन्द्रः पञ्च क्षितीनाम्॥ ९॥

यः। एकः। चर्षणीनाम्। वसूनाम्। इरज्यति। इन्द्रः।

पञ्च। क्षितीनाम्॥ ९॥

य इन्द्रः स्वयमेक एव चर्षणीनां मनुष्याणामिरज्यति। ईष्टे। तथा वसूनां धनानामिरज्यति स इन्द्रः पञ्च निषादपञ्चमानांक्षितीनां निवासार्हाणां वर्णानामनुग्रहीतेति शेषः॥ एकः। इण् गतौ। 'इणभीकापाशल्यतिमर्चिभ्यः' कन (उ० ३।३२३) इति कन्। बाहुलकात्कनोभावः। नित्त्वादाद्युदात्तत्वम्। चर्षणीनाम्। प्रातिपदिकस्वरेणान्तोदात्तः। अन्तोदात्तादित्यनुवृत्तौ 'नामान्यतरस्याम्' (पा० ६।१।१७७) इति विभक्तेरनुदात्तत्वम्। वसूनाम्। 'नित'इत्यनुवृत्तौ 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभश्च' (उ० १।१०) इत्युप्रत्ययः। नित्त्वादाद्युदात्तः। इरज्यति। कण्ड्वादिष्विरज् ईर्ष्यायाम्। अत्रैश्वर्यार्थः। 'कण्ड्वादिभ्यो यक्' (पा० ३।१।२७) प्रत्ययस्वरेणोदात्तः। पञ्च। पचि व्यक्तीकरणे। पञ्चेश्चेति कनिन्। नित्त्वादाद्युदात्तः। क्षितीनाम्। प्रातिपदिकस्वरेणान्तोदात्तः। नामन्यतरस्यामिति विभक्तेरुदात्तत्वम्॥

आश्विनं शंसिष्यन्निन्द्रं वो विश्वतस्परीति जुहुयात्। संस्थितेष्वाश्विनाय स्तुवत इति खण्डे वयमहां असि सूर्येति द्वाभ्यामिन्द्रं वो विश्वतस्परि (आ० श्रौ० ६।५) इति सूत्रितम्॥ चतुर्विंशेऽहनि प्रातःसवने ब्राह्मणाच्छंसिन इन्द्रं वो विश्वतस्परीत्यारंभणीया। चतुर्विंश इत्युपक्रम्य 'ऋजुनीती नो वरुण इन्द्रं वो विश्वतस्परि' (आ० ७।२) इति सूत्रितम्।

स्क०—य एक एव चर्षणीनां मनुष्याणां ब्राह्मणादीनां वसूनां धनानां च इरज्यति। इष्टे इन्द्रः। पञ्चानां क्षितीनां मनुष्यजातीनां, गन्धर्वाः पितरोदेवा इत्येतासाम्। ९॥

वे०—य इन्द्रो मनुष्याणां पञ्चानां क्षितीनां निवसतां, गन्धर्वा पितरो देवा असुरा रक्षांसि पञ्चत्वम्। तेषां प्रदेयानां, धनानामीष्टे। ९॥

दशमीमृचमाह—

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः।

अस्माकमस्तु केवलः॥ १०॥

इन्द्रम्। वः। विश्वतः। परि। हवामहे। जनेभ्यः।

अस्माकम्। अस्तु। केवलः॥ १०॥

हे ऋत्विग्यजमानाः। विश्वतः सर्वेभ्यो जनेभ्यः परि उपर्यवस्थितमिन्द्रं वो युष्मदर्थं हवामहे। आह्वयामः। अतः स इन्द्रोऽस्माकं केवलोऽसाधारणोऽस्तु। इतरेभ्यो ऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः॥ इन्द्रम्। रन्प्रत्ययान्तो निच्वादाद्युदात्तः। वः। अनुदात्तं सर्वमित्यनुवृत्तौ 'बहुवचनस्य वस्नसौ' (पा० ८।१।२१) इति वस्। विश्वतः। (पा० ६।१।१९३) लितीति प्रत्ययात्पूर्वमुदात्तम्। परि। निपातत्वादाद्युदात्तः। 'संहितायां पंचम्याः पराध्यर्थे'। (पा० ८।३।५१) इति विसर्जनीयस्य सत्वम्। हवामहे। ह्वेञः 'शपि बहुलं छन्दसी' (पा० ६।१।३४) ति संप्रसारणम्। परपूर्वत्वम्। गुणावादेशौ। जनेभ्यः। जन्यन्त इति जनाः। जनयतेः कर्मणि घञ्। 'जनिवध्योश्च' (पा० ७।३।३५) इत्युपधाया वृद्ध्यभावः। ञित्वादाद्युदात्तत्वम्। अस्माकम्। अस्मच्छब्दोऽन्तोदात्तः। 'शेषे लोप' (पा० ७।२।९०) इत्यन्तलोपपक्षे 'साम आकम्' (पा० ७।१।३३) इत्याकारेणैकादेश उदात्तः। टिलोपपक्ष उदात्तनिवृत्तिस्वरेणाकार उदात्तः। केवलः। वृषादेराकृतिगणत्वादाद्युदात्तः॥

॥ इति प्रथमस्य प्रथमे चतुर्दशो वर्गः॥

॥ इति प्रथमे मंडले द्वितीयोऽनुवाकः॥

स्क०—हे यजमानाः? इन्द्र युष्मदर्थं विश्वतःसर्वेभ्यः परिहवामहे। आह्वयामः। जनेभ्यः अन्येभ्यो मनुष्येभ्यः। अस्माकमस्तुकेवलः। अस्माकं केवलानामस्तु। नान्येषामस्तु। १०॥

वे०—वोजनेभ्यः सर्वेभ्य एव वयमिन्द्रं हवामहे। सोऽस्माकमस्त्वसाधारणः॥ १०॥

इति प्रथमस्य प्रथमे चतुर्दशोवर्ग॥

इति प्रथमे मण्डले द्वितीयोऽनुवाकः॥

• Sarasvatī [ = Saras + matup (mat) + ṅīp (ī) = saras + vat (Pāṇ. VIII. 2. 9) + ī ; saras = sṛ, to move (Dhātupāṭha, 936, 1100) + asun (Uṇādi, 638).—*Saras* : According to Fick (Wörterb., 1870, P. 196), the word, signifying 'water, ditch, pond', has its corresponding Gr. *elso*, swamp, brook ; related to it, are also Goth. *ahva* = Lat. *aqua*, Old High German *ouwa*, Middle High German *ouwe* and Germ. *aue*. Later, Fick (1890, P. 328) gives the significance 'water' to *saras* and derives it from *sar*. Persson (pp 379-380) thinks that *saras* is related to Lit. *sėlis*, 'crib, manger', *sile*, 'trough' and Lett. *sile*, and has the significance of trough, bucket (from which is derived water-basin, pond, sea) ; he considers it, alternatively, to be another word, mixed up with one belonging to *sar*, to flow. Sommers combines the word *saras* with Gr, *phiale* (from *pi-sala*), *eleio*, to take, but Persson takes it to be uncertain. Further, the Baltic words *sl-io*, *sl-iė* are related to the Lat. *sol-eo*, to be accustomed, which seems to be derived from the same root as *sedeo*, *sedo*, *solium* (Smith, Latin-English Dic.). The last Lat. word, *solium*, as Persson thinks, is comparable to the words, enumerated above. He also shows the relation of *solium* with *sedere*, the two being taken as examples of dialectic change of *d* into *l*. The possibility of such a change has already been shown (Conway, Ind. Forsch. 2, 157 ff. ; Petr., Bezzen., Beitr., 25, 127 ff ; Brug., 1, 533 ; Sommer's Lat. Laut- u. Formenl., 193). The word 'sarasvatī' has its zend. equivalent *Haraquite* and old Persian *Harauvati*]. According to Nir., the word has three meanings : (1) river (2.23) ; one of the thirty-seven synonyms of rivers (2. 24). (2) the name of a deity (2,23) ; the goddess of speech (*vac*) (11.27). (3) the name of a river (9. 26) ; the word is derived thus : saras, water + vatī. In Bṛhaddevatā, we have plenty of references to Sarasvatī. Sarasvatī is speech and Sarasvat is so called because he has lakes (II. 51). *Vāc* (speech) becomes Aditi and Sarasvatī when she resides in the middle (region) (II. 76). Vāc is further identified with Suryā (Dawn) and Gaurī (I. 164. 41) (II. 81). According Śaunaka, the author of Bṛhaddevatā, the Sarasvatī (in I. 3. 10-12) is praised in two ways, as a river and as a deity. She is praised as a river in II. 41. 6, III. 23. 4, VI. 52. 6, VII. 95. 2, VIII. 21.18, X. 64. 9 ; according to Yāska, also in VI. 61. 2. Again (in IV. 39), *vāc* is called Sarasvatī and *Prāṇa* (Breath) is Sarasvat. The story of Nāhusa and Sarasvatī (of R. V. VII. 95-96) is told in VI. 20-24.

Sāyaṇa gives the following senses : (1) river [1. 142. 9 ; 1. 164. 52 ; II. 30. 8 ('a running Goddess-river diefied) ] ; (2) name of a river (I. 3. 12 ; II. 41. 16 ; III. 23. 4 ; VI. 41. 4, 7, 10, 11, 13 ; VI. 52. 6 ; VI. 61. 2 ; VII. 36. 6; VII. 95. 1, 2 ; VII. 96. 1 ; VIII. 21. 17, 18 ; X. 64. 9 ; X. 65. 13 ); (3) name of a Goddess (V. 43. 11 ; V. 46. 2 ; VI. 49. 7 ; V1. 50. 12 ; X. 17. 7 ; X. 30. 12 ) ; (4) Goddess of the sky (1. 188. 8) ; (5) Goddess of speech (madhyamicā vāgdevī, probably the goddess of sound in the middle region, the thunder of the atmosphere). (II. I. 11 ; III. 4. 8 ; III. 54. 13 ; V. 42.12 ; VII. 39. 5 ; VII. 40-3 ; IX. 67. 32) ; elsewhere he remains silent about the significance of *sarasvatī*. Geldner (Glossar) gives it as the name of the wellknown sacred river and her presiding goddess. Grassm. (Wörterb.) gives the following meanings : (1) Name of a river, partly Indus and, in part, to a smaller river later called by this name (III. 23. 4, mentioned with Dṛṣadvatī and Āpayā), (2) revered as goddess (I. 164. 49 ; II. 41. 16, 17 ; VI. 49. 7 ; VI. 61. 1-8, 10, 11, 13 ; VII. 95. 6 ; VII. 96. 1, 3-6 ; IX. 67. 32 ; X. 17.

8, 9 ; X. 30. 12), and (3) invoked with other rivers [II. 30. 8 ; V. 42. 12 ; VI. 52. 6 ; VIII. 54. 4 (Bālakhilya ) ; X. 64. 9 (with Sarayus Sindhu ) ; X. 75. 5 ; X. 184. 2] ; also (4) with other deities, as Indra, Maruts, Aśvins, Puṣan, etc. (I. 89. 3 ; II. 32. 8 ; III. 54. 13 ; V. 43. 11 ; V. 46. 2 ; VI. 50, 12 ; VII. 9. 5 ; VII. 35. 11 ; VII. 36. 6 ; VII. 39. 5 ; VII. 40. 3 ; VIII. 21. 17, 18 ; IX. 81. 4 ; X. 65. 7, 13 ; X. 131. 5 ) ; (5) as Goddess of speech (I. 3. 10—12) and in this sense mentioned with (6) with Iḍā and Bhāratī (I. 188. 8), or (7) with Iḍā and Mahī (I. 13. 9 : V. 5. 8), or (8) with Hotrā, Bhāratī, Iḍā, Mahī (I. 142. 9), or (9) with Hotrā, Bhāratī, Iḍā (I. 192. 11).

We shall now see in what different senses the word *sarasvatī* has been used in the Ṛgveda. In dealing with the subject we shall take into account (i) the ṛk itself, (ii) other ṛks of the hymn, (iii) the sage, who composed the hymn and (iv) his family, in the case of the family collections.

(1) The river Indus or Sarasvatī (the modern Sarsuti) simply or personified as a goddess.—I. 3. 10-12. According Sāyaṇa, the goddess of speech personified in the first two ṛks and a Goddess in the form of river in the last. According to Gr. the Goddess of speech. But taking the words *pāvakā* (cleanser by water) and *arna* (river) we take the sense of 'some river or the same diefied', As the ṛk is composed by Madhucchandā, the son of Viśvāmitra, whose hermitage was on the western bank of the present Sarsuti (in Kurukṣetra) (Mahābh., Śalya,, ch. 43), we take it to mean the present Sarsuti. We do not think that any reasonable person will go to invoke a river far distant from his place by leaving a similarly large river situated close by and equally revered.—II. 30. 8 ; II. 32. 8 ; II. 41. 16-18. The hymns of the second maṇḍala on Sarasvatī are all composed by Gṛtsamada, Gṛtsamada was Śunahotra's son and was sixth in descent from Atri (Principles of Pravara and Gotra, Mysore Series, No. 25). Viśvāmitra formed the fifth generation. Further, Gṛtsamada went over to the family of the Bhṛgus. Of eight times the Sarasvatī was invoked by him, he twice mentioned (II. 1. 11. ; II. 3. 8) her with Iḍā and Bhāratī, the three representing three forms of fire recognised by other sages as well. Once (II. 35. 5) he mentions them as the 'three goddesses'. In. II. 30. 8, he praises her with Indra and the Maruts, both connected with rains and storms. In II. 32. 8, he simply invokes her as a goddess. Of II. 41. 16-18, the first stanza mentions Sarasvatī as the 'greatest of rivers' and in the last one she is called *ṛtavarī* one having waters, (Sāyaṇa ; in Nir., ṛta = water). According to K. C. Chattapādhāya (Journ. Dep. Letters, 15, 1927, No. 11), the Sarasvatī of II. 30. 8 is better taken to be the Indus ; the Sarasvatī in II. 41. 16 is taken to be the Indus according to Roth (Wörterb.) ; while K. C. Ch. considers the significance 'not precise'. We may hold, taking into account the residence of the Bhṛgus in Prayāga (or Allahabad), that here (in II. 30. 8 ; II. 32. 8 ; II. 41. 16-18) also the Ṛgvedic Sarasvatī is the modern Sarsuti. The passage 'greatest of the rivers' conveys no inportance as when one invokes a deity he always gives him or her the highest possible epithets. The Sarasvatī of II. 30. 8 and II. 32. 8. may be the goddess of thunder ; but as the composer is the same, it does not seem probable that the same person will use the same word in such widely different senses.—III. 23. 4. The hymn 23 is composed by Devaśrava and Devavāta, sons of Bharat. In the principles of Pravara and Gotra, they

are mentioned as the sons of Viśvāmitra. Bharat is given as the sixth in descent from Atri and Viśvāmitra as the seventh from Atri, both descending from Purūravā, the great-grandson of Atri. The river is mentioned with Dṛṣadvati (the modern Chitrang, Chautang or Chitang) and Āpayā (the modern Apagā) (See N. L. Dey's Geographical Dic.). It is evidently the modern Sarsuti. The later hermitage of the sage Viśvāmitra was on the western bank of the Sarasvatī (in Kurukṣetra) and the earlier ones further east (See Dey's Geographical Dic.)—VI. 49.7; VI. 50. 12; VI. 52. 6. All of these were composed by Ṛjiśvān, the son of Bharadvāja. The first and the third ṛks have clear indications of the Sarasvatī as a river. Although the second does not show any thing, we may take it to mean the river, as it is composed by the same sage. K. C. C. takes the first and third as the river Indus. Now, the hermitage of Bharadvāja was situated in Prayāga (Allahabad). It is more probable that his son will invoke the river much close to his residence than one which is situated so far off. So, we may take it to be the Sarsuti.—VI. 61. A hymn dedicated to Sarasvatī by Bharadvāja. K. C. C. takes VI. 61. 2 to indicate the Indus, as the river is said to strike on the mountains. He also discusses the word *Pārāvataghnī* (the destroyer of the Pārāvatas as an epithet of the Sarasvatī) and comes to the conclusion that it does not refer to any particular tribe. Other oriental scholars mean by the term 'coming from a distance', 'dashing against the rocks'. He also finds the Indus referred to in the stanza 3. He takes *Kṣitibhyo' vanīravinda* to mean 'and you found the tribes rivers' and *viṣam evyo asrava* 'but you made poison flow to the enemies or the demons'. The first passage may simply mean 'you gave land to the people', probably refering to the formation of soil by the shifting of the course of the river. In the second verse *viṣa* is 'water' (See Nir. 2.24); hence the passage means 'you poured forth water to them (the people). K. C. C. again mentions the verses 8, 9, 10, 12, as all referring to the Indus. The epithets in the verse 8 are all applicable to the Sarsuti which was quite a large river in the Vedic period. The word *saptasvasā* means 'having seven sisters' may simply refer to seven neighbouring rivers which joined it to flow into the indus. Thus it can be applied to the Sarsuti of the Vedic times. The word *saptadhātu* 'having seven members' may be identical in sense with saptasvasā. *Pañcajāta* may mean 'arising from five streams'. These epithets seem to be equally applicable to the Indus or the Sarsuti, but taking into account the residence of the composer we are inclined to regard it as the Sarsuti.—VII. 9. 5; VII. 35. 11; VII. 36. 6; VII. 40. 3; VII. 95; VII. 96. All these stanzas and hymns were composed by the sage Vasiṣṭha. The westernmost hermitage of Vasiṣṭha was situated at Mount Abu, on the Aravali Hills, in Rājputānā. The Saraśvatī in the first two stanzas can be taken either as a river or as the goddess of thunder, but; in consideration of the following, we are inclined to take them as referring to the river Sarasvatī, as composed by the same sage. The third stanza is taken to mean the Indus by K. C. C., but we take it to mean the Sarsuti. The word *Sindhumātā* is taken to mean 'one having the Sindhu for her mother', and the word *saptathī* to indicate 'seventh'. The fourth stanza not indicating anything is taken by us to refer to the river on the same ground as the first and the second. The last two hymns are dedicated to the river Sarasvatī and K. C. C. takes them to mean the river Indus. The first stanza might perhaps have indicated both the Sarasvatī (the Sarsuti) and the Sindhu (the Indus); this seems to be

shown by the word *anya* (other). In the second stanza, Nahuṣa (from Rāmāyana) belonged to Ikṣāku family and was a king of Ayodhya. As he travelled in a chariot (see the story in Br. Dev. VI. 5), his coming to the bank of Sarasvatī does not prove either way or rather proves that Sarasvatī is the present Sarsuti river. The word āsamudrāt may mean that the river reached the sea or nearly reached it. The main part of the first hemistich of the third stanza is taken by K. C. C. to mean 'he who was a child before has become a potent bull now' applies equally well to the Sarsuti, as the river in the Ṛigvedic time is shown by its dry bed to be at least as wide as the Indus (See Map of Panjab issued by the Surveyor-General of India). In the fourth stanza, the words *sakhibhyah uttarah* (surpassing her associates) are equally applicable to the Indus and the Rigvedic Sarasvatī. In the fourth, fifth and sixth stanzas we have clear reference to sacrifice performed by Vasiṣṭha on the bank of the Sarasvatī. We are inclined to take the Sarasvatī here to represent the present Sarsuti, and not the Indus.—VIII. 21. 17, 18. The twenty-first hymn was sung by Sobharī, the son of Kaṇva, in praise of the gift by the king Citra. The two stanzas refer to the sacrifice performed by the king on the bank of Sarasvatī. K. C. C. finds no data to find out the actual nature of Sarasvatī. It is highly probable that the Sarasvatī here represents the present Sarsuti. In Bṛhaddevatā (VI. 58-62) we are told that the king Citra held his sacrifice in Kurukṣetra. —VIII. 54. 4. This is a Bālakhilya stanza composed by Pragātha. Here we have mention of the Sarasvatī and *Sapta Sindhava* (seven rivers) along with several other deities. K. C. C. takes the Sarasvatī to be the Indus. We are inclined to have the same view here.—IX. 67. 32. The hymn 67 is composed by Pavitrā or Vasiṣṭha or both. There is no clear indication of the nature of the Sarasvatī. K. C. C. takes her to be 'any river'. Considering the author to be Vasiṣṭha, she may be the present Sarsuti.—X. 30. 12. K. C. C. could not decide which river is meant. We are inclined to believe that the author meant a river in general.—X. 64. 9. The hymn was composed by Gaya, of the Atri family. Mentioned with the Sindhu (Indus) and Sarayu (Ghogra or Gogra), it is evidently the river Sarsuti.—X. 75. 5. The Sarasvatī is here invoked with Gangā (the Ganges), Yamunā (the Jumna), Satadru (the Sutlej), Paruṣṇi (the Ravi), Asiknī (the Chinab), Vitastā (the Behat or Jhelam), Marudvridhā (the united stream of the Jhelum and the Chenab), Ārjikīyā (the Bias) and Suṣomā (the Indus). It is thus the modern Sarsuti.

(2) *Sarasvatī* has been invoked with *Idā* and *Bhāratī* (I. 13. 19 ; I. 142. 9 ; I. 188. 8; II. 1. 11 ; II. 3. 8 ; II. 35. 5 ; III. 4. 8 ; IX. 5. 8 ; X. 110. 8). All the stanzas in which the three goddesses have been praised together belong to the Āpri hymn (praise of fire recited in animal sacrifice), except in II. 35, 5, where we have mention of 'three goddesses' only (no name) and which is dedicated to the deity *Apām Napāt*. Sāyaṇa takes them conjecturally the three female deities under consideration. *Sarasvatī* is taken as the Goddess of Speech by the scholars. *Idā* (or Ilā) is the Goddess of holy speech (Roth) or the Goddess who bestows her gift from pouring forth of praise (Gr.). Bhāratī is taken as the Sunshine considered as a Goddess (Roth) or a Goddess of Speech (Gr.). We are inclined to take them as the three forms or representations of the fire belonging to the three regions of the world. *Bhāratī* may be taken as the Sun's rays which represent the fire of the Heaven. The term *hotrā*

(the performer of sacrifice) is found in connection with Bhāratī in two places and are taken as a substantive, meaning another goddess. The word may be taken as an epithet of Bhāratī signifying conductor of the sacrifice (one who invokes the gods and goddesses to the sacrifice). *Sarasvatī*, in our opinion, was originally the Goddess of thunder and later became the Goddess of speech. The close connection of thunder with lightening is well known. We have already set forth this view above. Thus, this goddess is one of the middle (atmospheric) region. Lastly, the Goddess *Ilā* is one of the earth. Her close connection with hundred autumns (i. e., years) no doubt indicates human life of one hundred years. The prayers wanted to live the full span of life of hundred years so that they might be gifted with vitality for such a long period. She may be taken as the 'Goddess of the vital fire or force' on the earth. Her connection with the deities as well as with the human beings is distinctly mentioned in III. 4.8 (See Mon.-Will. Dic.).

(3) Sarasvatī as the goddess of speech (originally the deity of thunder as noted above).—I. 89.3. It might refer to the deity of thunder or to the river.—II. 30.8 ; III. 54.13. Sarsvatī is clearly the goddess of thunder.—V. 42.12 ; V. 43. 11 ; V. 46.2. According to Gr., the Sarsvatī of the first stanza means some river, the Indus or Sarsuti, and the second and the third stanzas mean some goddess. K. C. C. takes the first and second stanzas to refer to the Indus. All these three hymns belong to Atri family : The first was composed by Atri or his son, Bhauma. The second was composed by Atri and the third one by Pratiksatra, a descendant of Atri. In the second stanza, the goddes is invoked from the heaven and from the cloud (*parvata*). The first stanza can be interpreted in two ways. Without changing the text, Sarasvatī may be taken as the wife of Indra [as the term *patnī* (wife) is in singular] and the 'rivers' invoked seperately ; or, as Sāyaṇa has done, we can change the word 'wife' into 'wives' and make Sarasvatī and the rivers the wives of Indra. We prefer the first interpretation. In the third stanza Sarasvatī seems to be a goddess of thunder.--X. 81.4 ; X. 65.1, 13. Both, being composed by the same sage, indicate the goddess of speech.—X. 66.5. This is also composed by the last author, hence it is taken to refer to the goddess of speech.—X. 131,5. As Sarasvatī is said to have accompanied Indra, we take her to mean the goddess of thunder (secondarily the goddess of speech).--X. 184.2. Considering the context, we take her as the goddess of speech (rather the goddess of heaven).

Sarasvatī as a river. Taking into account the residence of the sages and other factors, we are obliged to identify it, in nearly all cases, with the Sarsuti river of to-day. In Atharvaveda, we have mention of three Sarasvatīs, which are taken to be as the Helmand of Afghanistan (Harakhaiti of Avesta), the Indus and the Sarsuti (Ragozin's Vedic India). It is highly probable that when the Aryans began to perform well-organised sacrifices they have advanced greatly towards the east from the north-west corner of India and have settled down as agricultural people. They were now too far off from the Indus to perform any sacrificial rite on her bank and invoke her in their songs.

Course of the ancient Sarasvatī. Following the researches of the various scholars (R. D. Oldham, JASB, 1886, p. 322 ; C. F. Oldham, JRAS, 1893, p. 51 ; Maps of the Cambridge History of India, vol. I. Ancient India ; map of Punjab published by the Surveyor-General of India ; Ancient India as described by Megastheneses and Arrian ; etc.),

we may, with diffident, describe briefly the course of the Rigvedic Sarasvatī. It was a large river. Arising from the hills of Sirmur in the Himalayan range, probably from five streams (pañcajātā), it flowed westwards and downwards. It received Dṛṣadbatī (the modern Chitrang) from the east. Apayā flowed into Dṛṣadbatī. The old course of the Sarasvatī was south of the present one. The present day Sarsuti is joined by the Mārkanda higher up from the west and the united stream ultimately joins the Ghaggar (Gharghar) which was evidently the lower part of the Sarasvatī (Panjab Gaz., Ambala Dist., Ch. 1). It ran in a south-west direction towards the sea. Its course is now shown by the dry river bed of Hakra. It either joined the Sutlej which immediately ended in the Indus or directly flowed into the Indus. The Indus at this situation was far to the east than it is now and used to flow into the Rann of Kach. Max Mueller thinks that the river flowed into the sea directly, basing his contention on Rv. VII. 95.2 (SBE, 32, p. 69). According to the AB (II. 19), the region at some distance from the river was even then desert (see Muir's Sanskrit Texts, vol. 2, p. 393) The disappearance of the river in the sands is mentioned in Mahābhārata (Vāna Parva, Tirthayātrā) and in Manu Saṃhitā (I. 21). We are inclined to mean the river Sarsuti by 'Sarasvatī' here.

Vājebhiḥ [Instr. pl. of vāja ; vāja = √vaj. to go, (Dhātupāṭha, 252) + ghañ.—The √vaj = Indogerm. *ueg*, freshen, move, be active. (Pokorny Wörterb. der Indogerm. Sprachen, p. 246). Gr., *a (F) exo*, I grow, I increase. Got., *wahsja*, I grow. Av., *vaza*. English, *wing* (?). Anglo-saxon, *waecnan*, *wōk*]. In Nir. (III. 9), the word *vāja* is mentioned as one of the twenty-eight synonyms of 'food' and of the twenty-six synonyms of 'fight.' Oldenberg (Z D M G,50, 443 ff) gives the following meanings : power, goodness, wealth, race ; originally, quick, energy with successful outcome. According to G. (Glossar), the word has been used in the following senses : (1) Victory, the power of victory, extraordinary power and speed (1. 145. 1 ; 91. 18 ; V. 85. 2 ; VIII. 19. 18 ; X. 39. 10). (2) Prize of victory, booty of war ; thence endowment for the priest and singer of the hymn ; thence, in the wider sense, any sort of gain, reward, prize, profit, any desired present (I. 5. 3 ; 11. 1, 3 ; 116, 19 ; 124. 13 ; 167. 1., II. 12. 15., III. 30. 11, 21 ; 16. 6., IV. 4. 14., V. 4. 1., VI. 17. 2, 14., VII. 1. 3 ; 25. 6 ; 32. 11 : 36. 8 ; 42. 6 ; 93. 6 ; 95. 6., VIII. 2. 19, 24 ; 75. 4 ; 96. 20 ; 102. 3., IX. 96. 8, 16., X. 192. 6., probably also III. 27. 1, 11). With victory (prize of victory) smoothly, the booty to gain (I. 5. 9 ; 73. 5., III. 25. 2., IV. 17. 8, 9., VII. 32. 14, 20 ; VI. 33. 2., X. 75. 3)., the reward to earn or receive (VI. 17. 15., X. 62. 11) ; with *bhṛ*, to carry (or gain) the prize (the victory) (I. 64. 13., X. 147. 4) ; with *ābhṛ* VIII. 1. 4 ; *vājān abhidru*, for the war, for the prize, for the race to run (X. 75. 2). (3) Combat, dispute, emulation, contest, driving competition ; next in loc. *vāje, vājesu*, in the victory, in the prize of victory. (I. 4. 8 ; 81. 1 ; 85. 5 (= ājau I. 51. 3) ; VI. 48. 2., VIII. 70. 8) ; also in the dispute on the distribution of the offerings between the rivals (competitors) (X. 81. 7) ; *vājāya*, to the prize of victory, to the contest, to the victory (IX. 3. 3, 4). (4) Power (AV. IV. 4. 8). (5) Bird of prey (probably Astur gentilis Linn.) (III. 26. 4., V. 84. 2 ( to the breath) ; III. 27. 1, 11 (or these three to No. 2 ; cf. VII. 1. 3). (6) Name of the youngest of the three Ṛbhus (IV. 33. 3., VII. 48. 1 ; according to Sāyaṇa also VII. 36 8). Gr. (Wörterb.) rightly considers the original (ground) significance as power, vigorous power, alertness, particularly laying stress

